॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य,

राधाकृष्णशास्त्रिणः

कृतिः.

# नीतिदशप्रबन्धी ॥

विजयताम् ॥

THE

# NITIDASAPRABANDHI.

EDITED BY

**RADHAKRISHNA SASTRIAR,**

**Sanskrit Pandit.**

OF

**PUDUKOTA.**

Printed at the "Sri Vidya Press" Kumbakonam.

**1894.**

PRICE PER COPY 2 ANNAS.

विद्वद्भ्योनमः ।

# ॥ विज्ञापना ॥

भोभोस्सहृदयचूडामणयो विद्वज्जनाः !! अवधत्तेमां मामकीनां विज्ञापनाम् । अस्ति किल प्रशस्तसमस्तगुणमणिगणरत्नाकरायमाणश्रीमद्बृहदम्बिकाकरुणाकटाक्षपात्रभूत श्रीमन्मार्ताण्डभैरवमहीपालपाल्यमानं नवसालाभिधानं नगरप्रधानम् ॥

तत्रत्यराजकीयन्यायसभाप्राड्विवाकपदमधितिष्ठता द्राविडवाणीप्रावीण्यमुपजग्मुषा च B. A. B. L. अण्णास्वाम्यार्येण बहुधा समुत्साहितोऽहं औव्वाप्रभृतिभिः कविभिः द्रविडभाषया निबद्धान् नीतिनिरूपणनिपुणान् सप्त प्रबन्धान् गैर्वाण्या वाण्या विपर्ययणमयम् ।

ATHISOODY - CONDRAIVENDAN - VETRIVERKAI - VAKKUNDAM - NULVALY - NUNNERY - NEETHINERIVILAKKAM. इति तत्तद्ग्रन्थद्राविडनामानुगुण्येनैव मन्निर्मितानां संस्कृतग्रन्थानामपि क्रमेण मन्दारमाला, शम्याकमाला, जयशक्तिकरं, वागुल्लासः, तत्त्वपदवी, सन्मार्गदर्पणम्, नीतिमार्गप्रदीपिकेत्येवं, नामानि निरमासिषम् ॥

अग्रथ्नाश्च स्वातन्त्र्येण बालनीति नीतिपञ्चाशन्नीत्युपाख्यानाभिख्यांस्त्रीन् नीतिप्रबन्धान् ॥

नवसालपुरप्रवर्तमाननवरात्रमहोत्सवार्थं नानादेशागतसकलकलाकुशलराजसभाभूषणविबुधकविमणिगणपणायितान् चम्पकारण्यवास्तव्यैः सर्वतन्त्रस्वातन्त्र्यसदाचारसमासादितदिव्यकीर्तिकौमुदीविशदीकृतदशादिशाभोगैः महाराज्ञीदत्तमहामहोपाध्यायबिरुदैः श्रीमत्त्यागराजमखिरत्नैः ॥

राधाकृष्णसुधीरयं सुकविताद्याधारमेधायुतः
साधारण्यदसीयवाङ्नविदुषां बोधाधिकानामपि ।
तर्कव्याकृतिनीतिकाव्यसरणिं जानन् प्रबन्धान् बहून्
कर्तुं कः प्रभविष्यतीत इतरः प्रासीददस्मिन् प्रभुः ॥१॥
अद्राक्षं पूर्णेन्दुं ह्यस्प्राक्षं चन्दनं च सहचन्द्रम् ।
अघ्रासिषं च जातीं प्रापमियन्तं कदाह्लादम् ॥२॥
आकर्ण्यवाणीममृतायमानामस्याहमश्लाघिषि मोदमानः ॥
अदामिदं ख्यापयितुं च पत्रं, कुर्यां किमन्यद्धनलक्षहीनः ॥३॥
चम्पकारण्यवास्तव्यस्त्यागराजाध्वरी सुधीः ।
आशास्ते दीर्घमायुष्यं राधाकृष्णविपश्चितः ॥४॥

इति प्रशंसितान्, एवं अन्यैश्च महद्भिः विद्वद्भिः
श्रीराधाकृष्णकवेः कृतिरतिरम्याकृतिर्जयति ।
विरचितविद्वत्प्रीतिः प्रकटितनीतिर्मनोज्ञपदरीतिः ॥१॥
इत्यादिना संश्लाघितान् तानेतान् दश प्रबन्धान् नवसालपुरीसचिवत्वराजप्रतिनिधित्वपदमलङ्कुर्वतस्सकलावनीतलव्याप्तकीर्तिभूषणस्य Honourable C. S. I. शेषार्यशास्त्रिणस्साहाय्येन मुद्रणामध्यरोपयम् । तदेतेषां दशानां प्रबन्धानां सम्यङ्गनिर्वर्णनेन तत्र भवाद्भिर्भवाद्भिः ममायं श्रमस्सफलयितव्य इति सहस्रकृत्वस्सविनयं संप्रार्थये ॥

सहृदयैकानुवर्ती
नवसालपुरवासी
**राधाकृष्णशास्त्री.**

---

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य,

राधाकृष्णशास्त्रिणः.

कृतिषु.

# ॥ मन्दारमाला ॥

विजयताम् ॥

NO. I.

THE

# MANDARA MALA.

**ATHISUDI OF AVVAI.**

*Translated From Tamil Into Sanskrit.*

BY


**RADHAKRISHNA SASTRIAR,**

OF

**PUDUKOTA.**



Printed at the "Sri Vidya Press" Kumbakonam.

1894.

॥ श्री गुरुभ्योनमः ॥

अथ

# ॥ मन्दारमाला प्रारभ्यते ॥

1 मन्दारमालाभूषस्य शिवस्य प्रियमात्मजम्
स्तावंस्तावं गजमुखं प्रणमामस्सदा वयम्

2 ईहस्वाचरितुं धर्मम्
प्रशाम्यः क्रोध एव ते
दातुं शक्यं न गूहस्व
दीयमानं च मारुधः

3 मा प्रख्यापय वित्तं स्वम्
उत्साहं मास्म सन्त्यजः
गणितव्याकृती[1] विद्धि
याच्ञा निन्द्यैव सर्वथा

4 भिक्षां दत्वैव भुञ्जीथाः
ज्ञात्वा लोकगतिं चर
मा त्याक्षीश्शास्त्रपठनम्
ईर्ष्यावाक्यानि मा भणीः

---

१. गणितशास्त्रव्याकरणशास्त्रे अधीष्वेत्यर्थः

5 न हासयेः पणे[1] धान्यम्
वीक्षितं मा वदान्यथा
ङकारवत् भजेर्वर्ग्यान्[2]
अभ्यङ्धि त्वं शनेर्दिने

6 प्रीतिप्रदं वचो ब्रूहि
गृहं माकुर्वतिस्थलम्[3]
स्निह्य ज्ञात्वा शीलगुणान्
पितरौ रक्ष मानयन्

7 मा विस्मार्षीरुपकृतिम्
काले सस्यानि वर्द्धय
सभ्यस्सन् मा हरोत्कोचान्
अयुक्तं न समाचर

8 मा क्रीडयाहीन् सविषान्
निद्रायास्तूलतल्पके
वादीर्मा वञ्चनावाचः
मा कृथाः कुत्सिताः क्रियाः

---

१. पणे=विक्रयरूपेऽव्यवहारे ॥
२. वर्ग्यान्=कवर्गभवान् वर्णान् स्ववर्गे भवान् बन्धूंश्च ॥
३. अतिस्थलम्= स्वोपयुक्ता दधिकावकाशम् ॥
४. सभ्यस्सन् न्यायसभाध्यक्षस्सन् ॥
५. उत्कोचान = वादिप्रतिवादिदत्तानुपहारान् ॥

9 अभ्यस्येश्शैशवे विद्याः
धर्मं त्वं मैव विस्मर
मा कुरुष्वाधिकां निद्राम्
विस्मर क्रोधयुग्वचः

10 व्रतं तव प्राण्यहिंसा
वसेतररहितस्वकः
नीचान् गुणान् जहीहि त्वम्
गुणान् श्लाघ्यान् न हि त्यजेः

11 संयुज्य मा वियुङ्क्ष्वार्यैः
परद्रोहं परित्यज -
श्रोतुं यतस्व सच्छास्त्रम्
हस्तशिल्पं न संवृणु[1]

12 मा वाञ्छान्यस्वहरणम्
जह्यास्मावद्यकेळिकाः
राजाज्ञाध्वनि वर्तेथाः
विद्वत्सङ्घे वसेस्सदा

13 माऽनृतं वद सत्याभम्[2]
गृण्हीयाः कीर्तिदान् गुणान्

---

१. नसंवृणु नाच्छादय = अपितुप्रकटयेत्यर्थ. ॥
२. सत्याभम् = स्वोक्तिसामर्थ्यात् मत्यवद्भासमानम् ॥

मावादीः क्रोधकृद्वाक्यम्
कामयेथा न देवनम्[1]

14 क्रियमाणं साधु कुरु
ज्ञात्वा गम्यं त्वमाप्नुहि
सद्भिर्जुगुप्स्यो न वसेः
विस्मृतिं मा भजोक्तिषु

15 मा पर्यट वृथाऽऽलस्यात्
भव योग्योमतस्सताम्
पात्राय दातुमाकाङ्क्ष
कैङ्कर्यं कलयेर्हरेः

16 व्यपोहयेः पापचेष्टाः
देहि शोकाय माऽन्तरम्
कुरुष्वालोच्य कर्माणि
न देवं निन्द जात्वपि

17 अविरुन्धन् जीव पौरान्
मा भूर्दारवचोवशः
प्राज्ञं मा विस्मर स्नेहम्
मा सज्जापजयोचिते[2]

---

१. देवनं = अक्षक्रीडाम् ॥
२. अपजयार्हेकर्माणि मासज्जस्व ॥

18 आलम्बस्व दृढं पुण्यम्
देश्यानां सम्मतं कुरु
मैव भ्रश्येः स्थितेः स्वस्याः
निम्ने मा क्रीड पाथसि

19 मा खादीर्भक्ष्यमसकृत्
बहु शास्त्रं विदाङ्कुरु[1]
कलमान् पोषयेर्यत्नैः
यथाचारं समाचर

20 माकुरु द्रोहकर्माणि
ग्राम्यवाक्यानि मा भण
रुजेऽवकाशं नो दद्याः
निन्द्यानैव गदेर्गिरः

21 वात्सीर्मा सह सर्पैस्त्वम्
सावद्यं वद मा गिरम्
मा हिम्ने वस सन्मार्गे
स्तावकान् पोषयाश्रितान्

22 संस्कुर्वन् जीव केदारान्
सहायान् भज सज्जनान्

---

१. विदाङ्कुरु = विद्धि ॥

दूरीकुरु त्वमज्ञानम्
न युज्यस्व च बालकैः

23 वित्तं प्राणिहि गोपायन्
नाश्रयेर्युद्धजीवनम्
मनो न व्याकुलीकुर्याः
देहि माऽवसरं द्विषे

24 मा भाषस्वामितां वाचम्
भुक्तिमीहस्व माऽधिकाम्
मा युद्धस्य मुखे तिष्ठ
माकार्षीर्मूर्खसङ्गतिम्

25 सङ्गच्छस्व स्वपत्न्यैव
महतां शृणु भाषितम्
मागच्छ गणिकागेहम्
वद वाक्यमसंशयम्

26 निवर्तय महामोहम्
मास्तुहि स्वस्य कौशलम्
विवदस्व महद्भिर्मा
वाञ्छ विद्यामहर्निशम्

---

१. प्राणिहि = जीव ॥

27 वस मुक्त्यै ज्ञानपथे
भव शीलगुणोत्तमः
पौरैश्शुभाशुभे युङ्क्ष्व
मा भाणीः खड्गपातवत्

28 किञ्चिद्वाञ्छन् न दुष्कुर्याः
जहि निद्रामहर्मुखे
न विश्वस्याश्शत्रुजनान्
पक्षपातेन मा वद

॥ इति मन्दारमाला सम्पूर्णा ॥

---

शुभाशुभे = शुभेऽशुभेचकर्मणि ॥
दुष्कुर्याः = दुष्कृतमाचरेः ॥

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ शम्याकमाला ॥

विजयताम् ॥

---

THE

# SAMYAKA MALA

## NO. II.

## KONDRAI VENDAN OF AVVAI

*Translated From Tamil Into Sanskrit.*

BY

RATHAKRISHNA SASTRIGAL,

OF

PUDUKOTA.

Printed at the Sri Vidya Press, Kumbakonam.

---

1894.

श्रीगणेशायनमः ॥

॥ अथ ॥

# ॥ शम्याकमाला ॥

1 शम्याकमालाभूषस्य गिरिशस्य तनूभुवः
विघ्नेशस्याङ्घ्रियुगळं स्तुत्वा वन्दामहेऽन्वहम्

2 जननी जनकश्चापि प्रत्यक्षे देवते तव
आलये भगवत्सेवा सुतरां शुभदायिनी

3 गृहस्थधर्मास्सुकरा, यतिधर्मास्तु नो तथा
लुब्धैस्समार्जितानर्थान् गृण्हीयुस्तस्करादयः

4 मिताशनं हि नारीणां चारुत्वं परमं मतम्
स्वदेशजनविद्वेषं कुर्वन्नश्यति मूलतः

5 व्याकृतिर्गणितं चापि कथ्येते द्वे विलोचने
अचोदिताः प्रियकराः पुत्राः पित्रोस्सुधायिनाः

6 भैक्षजीव्यप्यवर्ज्यानि कर्तव्यानि समाचर
एकं सहायमालंब्य सत्प्रभुं निवसैकतः

7 वेदपाठादपि श्रेयान् सदाचारो द्विजन्मनाम्
ईर्ष्यावाचो ध्रुवं स्वेषां विभवानां विनाशिकाः

8 द्रागार्जय धनं धान्यं व्यर्थं व्ययमनाचरन्
अलङ्घनं भर्तृवाचां स्त्रीणां मुख्यं पतिव्रतम्

9 जारेभ्यस्स्वात्मरक्षैव योषितां चारुता परा
ईप्सितं चेन्न लभ्येत, विस्मरेरविलम्बितम्

10 अवरानपि भाषस्व वाचं त्वं विनयान्विताम्
आलोच्यमानेष्वागस्सु न भवेत् कोऽपि बान्धवः

11 मा विकत्थस्व वीर्यं स्वं करस्थेऽपि शरे शिते
द्रुह्येद्यदि सखा, तस्मिन् कर्तव्यं स्नेहवर्जनम्

12 वित्तनाशेऽपि चेद्धैर्यं, पूर्ववत् धनितां नयेत्
धनात् करगताच्चापि विद्या स्थास्नु धनं खलु

13 भूपेन ज्ञाप्यमानत्वमापत्साहाय्यकारकम्
पिशुनोक्तिः प्रयुक्ता तच्छ्रोतर्यग्निः समारुतः[1]

14 अपवादोक्तिनिरतः सर्वेषां द्वेष्यतामियात्
वन्ध्यात्ववारणं पत्न्याः स्वकुलस्य विभूषणम्

15 विद्वत्त्वकीर्तिः पुत्रस्य तत्पित्रोः कामनीयकम्[2]
शिवप्रपदनं नृणां तपसो रामणीयकम्[3]

---

१. पिशुनोक्तिश्रवणशीले प्रभौ गदिता पिशुनोक्तिः तद्विषयस्य नरस्य समारुताग्निरिव महानर्थकारिणी भवतीत्यर्थः ॥

२. कामनीयकम्=कमनीयत्वम् ॥

३. रामणीयकम्=रमणीयत्वम् ॥

16 ईहसे चेत् सुखं स्वस्य, कृषिमेव समाश्रय
शुभाशुभेषु साङ्गत्यं बान्धवानामलङ्क्रिया

17 द्यूतमाक्षेपवादश्च कुरुतो वेदनां सदा
विस्मरेच्चेत्तपश्चर्यां, अविद्या तं वशं नयेत्

18 सुगुप्तेऽपि स्थले निद्रां याहि यामादनन्तरम्
भिक्षां दत्वैव भुञ्जीथा, अस्ति चेद्विभवस्तव

19 अर्थवानेव धर्मं च कामं च समवाप्नुयात्
आलस्योपहता मर्त्याः पर्यटेयुः सुदुःखिताः

20 पितृवाक्यात् परो मन्त्रः फलदो नास्त्यपि क्वचित्
मातृदेहाद्दपि परं देवागारं न विद्यते

21 तरङ्गदुर्गमांभोधियानेनाप्यार्जयेर्धनम्
दीर्घः कोपः परिणमेदन्ततस्ममरात्मना

22 भर्तुरार्तावनार्ता स्त्री वस्तिवह्नोऽस्य पावकः
दूषयन्त्यः स्त्रियो भर्तॄन् तेषां प्रत्यक्षमृत्युवत्

23 देवे क्रुद्धे तपस्सर्वं संमिद्धमपि नश्यति
अनार्जयन् व्ययकरः पश्चाद्दुःखमवाप्नुयात्

24 तैषे माखे च शेष्व त्वं पलालपटले गृहे
सेवालब्धादपि स्वादु ह्यन्नं स्वकृपिसंभवम्

---

१. वस्तिः = नाभेरधः प्रदेशः ॥

25 मावोचथा अतिस्निग्धेप्यात्मदैन्यं कदापि च
सहवासात्सज्जनानामन्यदत्यन्तदुःखदम्[1]

26 ऋद्धेषु सर्वदेशेषु न काप्युत्पद्यते विपत्
विद्वत्ता सुदृढा नाम स्ववाचामनवद्यता

27 अनावृष्टावपि जलैः समृद्धे विषये वस
कर्माल्पमप्यारभस्व समालोच्य समापनम्[2]

28 धर्मशास्त्रविधीन् ज्ञात्वा साधुवृत्ते वसानिशम्
स्वचित्तेनापि नज्ञाता वञ्चना न हि कुत्रचित्

29 सम्यङ्निर्वर्तितं न स्यान्मनसाऽनादृतन्तपः
प्रत्युक्त्यशक्तं शोचन्तमपि मा ब्रूहि दुर्वचः

30 रूपलावण्यहीनेऽपि सर्वाशास्यो गुणो भवेत्
जीवहिंसामांसभुक्तिवर्जनं परमं तपः

31 ज्ञायेत कर्तुः सुकृतं कलितायाः कृषेः फलात्
अशान बुध्वा समयमपि सक्षीरमोदनम्

32 परस्त्रीसङ्गराहित्यं सर्वधर्मोत्तमोत्तमम्
अन्यूनस्तन्यपो बाल्ये भारं वोढुं हि शक्नुयात्

33 मांसाशनं जीवहिंसां चौर्यं चापि परित्यज
न भवेन्नीचजातीनां कदाप्याचार उत्तमः

---

१. सज्जनानां सहवासादन्यदित्यनेन असज्जनसहवासो लक्ष्यते ॥
२. समापनं = समाप्त्युपायम्

34 तत्वज्ञानां स्वेषु रागो नास्ति द्वेषः परेषु वा
मूढावत् भासमानत्वं नारीणां भूषणं विदुः
35 वसेच्चेदुचिते मार्गे, प्रशंसन्ति जनाश्च तम्
जहाहि द्रोहकर्माणि सर्वाण्यपिच सर्वथा
36 भोगो नाम स्वनुभवः स्वायासार्जितसम्पदाम्
सुदुर्लभामपि सुधां सहैवातिथिभिः पिब
37 वृष्टेरभावे केनापि करणीयं न साध्यते
सौदामनीनां सर्वासां पश्चाद्वृष्टिः प्रयोजनम्
38 नाविकेन विना नौका न व्रजेत्साधु सागरे
पूर्वे[1] द्रुह्यन् मुहूर्तार्धे चरमे तत्फलं भजेत्
39 वचनं ज्ञानवृद्धानाममृतं समुदीर्यते
शयनं तूलशय्यायां निद्राया रम्यतोच्यते
40 विभवः कृषिसंभूतो न कदाप्यपचीयते.
असेवमानस्सन् वेश्यागृहं वर्तस्व शीलवान्
41 अशृण्वतो विद्वदुक्तमुपायं नश्यति क्रिया
मौनं नाम ब्रह्मतत्वसम्यग्ज्ञानपरावधिः
42 चोळ[2]तुल्योऽपि भुञ्जीथा व्ययित्वैव यथामिति
वृष्टिश्चेत्सङ्कुचेल्लोके: तर्हि दानं च सङ्कुचेत्

---

१. पूर्वे मुहूर्तार्धे द्रुह्यन् पुरुषः चरमे मुहूर्तार्धे तत्फलं भजेदित्यर्थः द्रोहस्य शीघ्रफलकत्वादिति भावः

२. चोळः = चोळराजः ॥

43 आतिथ्यहीने गृहिणि गृहधर्मो न सिध्यति
शूरस्नेहः स्वशत्रूणां नाशने तीक्ष्णसायकः

44 सामर्थ्यं नाम दीनत्वदशायामप्ययाचनम्
उत्साहः कर्मसु सदा विभवानामलङ्क्रिया

45 सुनिर्मलस्वभावस्य वञ्चनाचिन्तनैव न
नृपः क्रुध्येद्यदि, तदा सहायः स्यान्न कश्चन

46 क्षेत्राटनपरो देवं संसेवस्व प्रतिस्थलम्
अनुन्नतानते देशे सुखं निद्रामवाप्नुहि
असंशीलितशास्त्राणां ज्ञानं शीलञ्च नो भवेत्

॥ इति शम्याकमाला संपूर्णा ॥

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ बालनीतिः ॥

विजयताम्

**NO. III.**

THE

# BALANEETHI.

BY

RADHAKRISHNA SASTRIAR,

OF

PUDUKOTA.

Printed at the "Sri Vidya Press" Kumbakonam,

1894

॥ श्रीसरस्वत्यैनमः ॥

॥ अथ ॥

# ॥ बालनीतिः प्रारभ्यते ॥

1 प्रणिपत्य महादेवं सर्वज्ञं सर्वकारणम्
अकारादिक्रमेणैव नीतिवाक्यान्यहं ब्रुवे

2 अधीष्व शैशवे विद्याः
आलम्बस्व शुभान् गुणान्
इच्छ सद्भिस्समं वासम्
ईश्वरं मैव विस्मर

3 उत्साहं मा जहीहि त्वम्
ऊरीकुरु न दुर्गुणान्
ऋणी कदापि न भवेः
ऌवन्माभज मृग्यताम्

4 एधय स्वं द्रव्यजातम्
ऐश्वर्यं गोपय स्वकम्
ओषधीः पोषयेर्यत्नैः
औदार्यमुचितं भज

---

१. ऌकारवत् मृग्यतां मा भज अपि तु सर्वत्र व्यापकः प्रसिद्धिं भजेत्यर्थः ॥

5 अम्बां पूजय सद्भक्त्यै

अस्सेव्यो भवता सदा

कलयालोच्य कर्माणि

खलैस्सन्त्यज सङ्गतिम्

6 गणितव्याकृती विद्धि

घटवन्मा जडो भव

ङकारवत् भजेर्वर्ग्यान्

चर नैव वृथाऽलसः

7 छलवाक्यानि मावोचः

जडसाङ्गत्यमुत्सृज

झटिति त्यज दुष्कर्म

ज्ञानं प्राप्नुहि मुक्तये

8 टङ्कहस्तं भजेर्भर्गम्

ठवर्तुलरविं नम

डहुहस्तः प्रभुं याहि

ढक्कापाणिं शिवं भज

---

१. अकारार्थो विष्णुश्शिवोवा ॥

२. प्रायशस्सर्वेष्वपि लिपिभेदेषु ठकारोवर्तुळ एव लिख्यत इत्येवमुक्तिः ॥

३. डहु = लिकुचफलम् ॥

9 तरङ्गिण्यां स्नाहि नित्यम्[1]
स्थले पुण्ये सदा वस
दस्युभ्यो रक्ष वित्तानि
धत्स्व पुण्ड्रं सदा मुखे

10 न भजेः प्रभुमत्यल्पम्
परद्रोहं परित्यज
फलवत् कर्म रचय
बलवत्सख्यमाप्नुहि

11 भण मा कोपकृद्वाक्यम्
मन्त्रान् जप शुभप्रदान्
यतीन् वन्दस्व भक्त्या त्वम्
रहितो भव दुष्कृतैः

12 लज्जां याहि दुराचारात्
वञ्चनां विजहीहि च
शब्दान् शुभान् प्रभाषस्व
षडङ्गश्रुतिविद्भव

13 सत्यमेव वचो ब्रूहि
हर्षयेर्वचनैर्जनान्
कल्ये निद्रां जहाहि द्राक्
कालं यापय मा वृथा

---

१. नित्यम् = अन्वहम् ॥

14 किल्बिषात् बिभियाश्शश्वत्
कीर्तिमार्जय यत्नतः
कुत्सितं भण मा वाक्यम्
कूटकृत्यानि मा कृथाः

15 कृत्वोपकारं मा ब्रूहि
क्लृप्तद्रव्येण[1] तुष्य च
केशवं त्वं प्रपद्यस्व
कैवल्याय स्पृहां कुरु

16 कोपं शश्वन्नयेश्शान्तिम्
कौटिल्यं विद्धि कुत्सितम्
गण्यो भव सतां मध्ये
गाने सक्तिं व्यपोहय

17 गिरमालप युक्तार्थाम्
गीष्पतेस्सदृशो भव
गुरून् प्रणम दृष्ट्वैव
गूहस्व स्वं न कौशलम्

18 गृहाण हितमुक्तं चेत्
गेहिन्या न वशो भव
गैर्वाणीं मानय गिरम्
गोभ्यो हितकरो भव

---

१. क्लृप्तेन = स्वभाग्यायत्तेन ॥

19 गौरवं स्वं हि मा त्याक्षीः
चपलत्वं परित्यज
चारुवृत्तानि गृण्हीष्व
चिकित्सकमते वस

20 चीरवस्सु विनीतस्स्याः
च्युतो माभूर्निजास्थितेः
चूष भुक्तौ नोच्चशब्दम्
चेलं वस्व न कश्मलम्

21 चैतन्यमेकं बुध्यस्व
चोरैर्मा कुरु सङ्गतिम्
चौर्यं कुर्या मा कदापि
जघन्यं जीवनं त्यज

22 जारकृत्यं मा तनुष्व
जितो माभूस्त्वमिन्द्रियैः
जीविकामाश्रय शुभाम्
जुष्टो माभव बालिशैः

---

१. चीरवस्सु = चीरवसनेषु तपस्विषु ॥

२. चूष = पिब ॥

23 जूतिं स्थाने नैव कुर्याः
जेमनं शीघ्रमाचर
जैवातृकत्वं प्रभजेः
जोषं वाच्ये न सन्तनु

24 ज्यौतिषं शास्त्रमभ्यस्येः
तनुं पोषय यत्नतः
तातस्य शृणु सद्वाक्यम्
तितिक्षा ते महान् गुणः

25 तीव्रं प्रयत्नमातिष्ठ
तुच्छं याचस्व मा जनम्
तूर्णं समाचरेर्धर्मान्
तृष्णामनुचितां त्यज

26 तेजीयांसं पूजयस्व
तैलं दद्याश्शनेर्दिने

---

१. जूतिं = शीघ्रताम् ॥
२. जेमनं = भोजनम् ॥
३. जैवातृकत्वं = आयुष्मत्त्वम् ॥
४. जोषम् = मौनम् ॥
५. सन्तनु = कुरु ॥
६. तेजीयांसम् = अतिशयेन तेजस्विनम् ॥

तोकं[1] प्रगृहाण यत्नेन
तौर्यत्रिक[2]रतिं त्यज

27 दयां भूतेषु तनुयाः
दानं जानीष्व कीर्तिदम्
दिनेदिनेऽभ्यस्य विद्याः
दीनान् मर्त्यान् पुषाण च

28 द्रुमेभ्यस्सलिलं यच्छ
दूनान् शीतय सद्गिरा
दृप्तो विद्यादिभिर्मा भूः
देवास्तित्वं विनिश्चिनु

29 दैन्यं स्वं मा प्रकटय
दोषान् स्वान् परिवर्जय
दौस्थ्यं[3] परिहर क्षिप्रम्
धर्मचिन्तापरो भव

30 धाम[4] सम्पादयाशु त्वम्
धियं निर्दोषतां नय

---

१. तोकम् = अपत्यम् ॥
२. तौर्यत्रिके = नृत्तगीतवाद्ये ॥
३. दौस्थ्यम् = दुस्थितिम् ॥
४. धाम = गृहम् ॥

धीमतां धुरि गण्यस्स्याः
धुनीयुक्ते[1] पुरे वस
31 धूर्तस्नेहं मा तनुष्व
धृष्टो भव विपत्तिषु
धेनुं रक्ष निजे गेहे
धैर्यं विद्धि महद्धनम्
32 धोरणीमाश्रय शुभाम्
धौरेयो भव कर्मसु
न विश्वस्याश्शत्रुजनान्
नाश्रयेर्युद्धजीवनम्
33 निम्ने पाथसि मा क्रीड
नीतिं मा मुञ्च जात्वपि
नुतिपात्रं भव गुणैः
नूनं भुङ्क्ष्वौदनं मितम्
34 नृशंस[2]चरितो मा भूः
नेतुः[3]स्संमतमाचर
नैव द्यूतं कामयस्व
नो वियुङ्क्ष्व महात्मभिः

---

१. धुनी = नदी ॥
२. नृशंस = क्रूर ॥
३. नेतुः = स्वनायकस्य ॥

35 नौत्कण्ठ्यं भज निन्दायाम्
पराणाय स्पृहां त्यज
प्राश्नं न विस्मर स्नेहम्
पितरौ रक्ष मानयन्

36 प्रीतो भव परोत्कर्षे
पुत्रं विद्यासु शिक्षय
पूर्वैराचरितं कुर्याः
पृथु निर्मोहि मा गृहम्

37 पेशलो भव सर्वत्र
पैशुन्यं परिवर्जय
पोगण्डं मा परिहस
पौरैर्युङ्क्ष्व शुभाशुभे

38 बन्धुदोषान् न मन्यस्व
बाडबान् नैव धिक्कुरु

---

१. औत्कण्ठ्यम् = उत्कण्ठाम् ॥
२. पृथु = स्वोपयुक्तादधिकावकाशम् ॥
३. पेशल. = दक्ष.
४. पोगण्डम् = विकलाङ्गम् ॥
५. बाडबान् = ब्राह्मणान्

बिलेशयेन मा जीव
बीभत्सां[1] मा कुरु क्रियाम्
39 बुध्यस्व दोषानात्मीयान्
ब्रूहि वाक्यं मितं हितम्
बृन्दे महति मा भुङ्क्ष्व
वेदार्थान् परिचिन्तय
40 वैदिकान् पूजय जनान्
बोधं वेदान्तजं भज
बौद्धादीनां मतं जह्याः
भद्रं स्वस्य गवेषय
41 भार्यापती भेदय[2] मा
भिक्षां वितर भिक्षवे
भीरुभावः परित्याज्यः
भुङ्क्ष्व साकं गृहागतैः
42 भूभृता भव विज्ञातः
भृत्यान् पोषय दानतः
भेदं सजग्धौ नो कुर्याः
भैरवत्वं[3] दृशि त्यज

---

१. बीभत्साम् = विकृताम् ॥
२. भेदय = विद्वेषय ॥
३. दृशि भैरवत्वम् = क्रौर्यम्, क्रूरदृष्टिमित्यर्थः ॥

43 भोगान् भुङ्क्ष्वात्मसदृशान्
भौमस्याभ्यङ्क्षि मा दिने
मदनस्य वशो मा भूः
मा स्तुहि स्वगुणान् स्वयम्

44 मिथ्या मा वद सत्याभम्
मीमांसस्वात्मने हितम्
मुञ्चान्यवनितासङ्गम्
मूर्ध्ना विनम देवताः

45 मृत्युं मस्तगतं विद्धि
मेषाणां मा व्रजान्तग
मैरेयं[1] क्वापि न पिबेः
मोक्षोपायं विचिन्तय

46 मौनं भजात्मविज्ञानात्
यतिभ्यो नापराध्य च
याच्ञां निन्द्यां विजानीहि
यियाम[2] क्षेत्रमण्डलम्

१. मैरेयम् = मद्यम् ॥
२. यियाम = यातुमिच्छ ॥

47 युवत्वं नश्वरं विद्धि
यूथं[1] माऽभिव्रजेर्वने[2]
ये श्रेष्ठास्तेषु संस्निह्य
यैर्वस्तव्यं, सहास्व तैः

48 योषित्सु गोप्यं मा ब्रूहि
यौवनान्नभजेर्मदम्
रसनां स्ववशे कुर्याः
राज्ञा सह विरुन्त्स्व[3] मा

49 रिपून् जहि प्रयत्नेन
रीढां[4] मा क्षमतां भवान्
रुजेऽवकाशं माद्द्याः
रूपाजीवा[5]स्पृहां त्यज

50 रेफै[6]स्सह वसेर्न त्वम
रैसमृद्धिं[7] समार्जय

---

१. यूथम् = तिरश्चां सङ्घम् ॥
२. माऽभिव्रजेः = आभिमुख्येनमागच्छ ॥
३. विरुन्त्स्व = विरोधं कुरु ॥
४. रीढाम् = अवमाननाम् ॥
५. रूपाजीवा = वेश्या ॥
६. रेफैः = अधमैः ॥
७. रैसमृद्धिम् = अर्थसमृद्धिम् ॥

रोगं नाशय भैषज्यैः
रौद्रीं[1] चिन्तां परित्यज

51 लशुनं नाऽभ्यवहरेः
लास्यं स्त्रीणां न लोकय
लिपिं रम्यां सुशिक्षस्व
लीलालालसतां त्यज

52 लुनीहि मा तृणं व्यर्थम्
लूतावत्[2] यत्नवान् भवेः
लेलिहानं नोपसर्प
लोकवृत्तानुगो भव

53 लौल्यं मथान चित्तस्य
वधूर्मैवावमानय
वासरे त्वं न निद्राहि
विस्मृतिं मा भजोक्तिषु

54 वीरं जनं न विद्विष्याः
व्युत्पद्यस्व बहूक्तिषु[3]
व्यूहे वस बहुज्ञानाम्
वृथा कर्म न सन्तनु

---

१. रौद्रीं = क्रूराम् ॥

२. तन्तुवायकृमिर्हि स्वावासपटले जनैः छिन्नेऽपि पुनःपुनर्बध्नन् आबाल्यात् अनलसः सदाप्रयत्नपर एवाप्नोति प्रसिद्धिः ॥

३. बहूक्तिषु = बहुभाषासु ॥

55 वेलां नोल्लङ्घ्य निजाम्
वैरं दीर्घं तनुष्व मा
व्योषं भुङ्क्ष्वामयहरम्
वौषट्कृद्धविरर्पय

56 शरणायागतं रक्ष
शाश्वतीं विद्धि मा तनुम्
शिशिरामीरय गिरम्
शीलं मा मुञ्च जात्वपि

57 शुश्रूषस्व गुरून् भक्त्या
शून्ये मा भवने वस
शृङ्गारैकमना मा भूः
शेष्व मञ्चेषु रात्रिषु

58 शैलूषसङ्गं मा कुर्याः
शोकं प्राप्तं न चिन्तय
शौर्यं व्यायामतो विन्देः
सहस्वागस्त्वमादिमम्

१. वेलाम् = मर्यादाम् ॥
२. व्योषं = शुण्ठीपिप्पलीमरीचिरूपम् कटुत्रयम् ॥
३. वौषट् = हविरर्पणमन्त्रः ॥
४. आगः = अपराधम् ॥

59 साहसं मा वितनुथाः
सिद्धिं ज्ञात्वा क्रियां कुरु
सीरजं जीवनं श्रेष्ठम्
सुखप्राप्यं[1] न सन्त्यज

60 सूनुं विद्धि महाभाग्यम्
सूतिं मा प्राक्तनीं रुधः
सेवां श्ववृत्तिं मन्यस्व
स्वैरी वस सुवृत्तवान्

61 सोदर्ये स्निह्य सुतराम्
सौहित्यं मा परित्यज
हर्यक्षवद्[2]दीनस्स्याः
क्षणदां मैव जागृहि

॥ बालनीतिस्समाप्ता ॥

---

१. सुखप्राप्यम् = पापभिन्नमिति शेषः ॥
२. हर्यक्षवत् = सिंहवत् ॥

॥ श्रीरस्तु ॥

नवसाल्पुराभिजनस्य

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ वागुल्लासः ॥

विजयनाम ॥

---

THE

## NO. IV

# VAGULLASA

VAKKUNDAM (MOODURAI) OF

AVVAI

*Translated From Tamil Into Sanskrit.*

RADHAKRISHNA SASTRIAR,

By

PUDUKOTA


Printed at the Sri Vidya Press, Kumbakonam

---

[illegible]

॥ श्रीरस्तु ॥

॥ सज्जनेभ्योनमः ॥

॥ अथ ॥

# ॥ वागुल्लासः प्रारभ्यते ॥

वागुल्लासो भवति प्रतिभाऽऽरोग्यं श्रियः कटाक्षश्च
पुष्पैर्गजाननस्य प्रवाळभासस्सदाऽर्चितौ पादौ

१

कस्मैचिदुपकृतंचेत्, प्रतिकुर्यात्मच्चकदेतिनविशङ्कयम्
ददते हि नारिकेळाः पादैःपीतं पयःस्वयं मूर्ध्ना

२

साधुजनायोपकृतिःकलिनाभातिहिशिलालिपिंसमाना
जलविलिखितलिपितुल्या मंरचिनामाविशुष्कहृदयाय

३

दारिद्र्ये तारुण्यं वृद्धत्वे विषयलब्धिरपिच तुदेत्
अस्ममयकुसुमोद्गमवत् विभर्तृकारूपवच्च ते व्यर्थे

४

भस्मीकृतोऽपिशङ्खोधवलः, क्षीरंसुतप्तमपि मधुरम्
सुजनःसुजनोविपदिच्, खलस्तुनसखीकृतोऽपिमांसिच्येत्

6

शश्वद्यत्नवतामपि कर्म ऋते कालमेति न फलाप्तिम्
उत्तुङ्गाअपितरवोविनाऋतुंस्वोचितंनाहिफलन्ति

7

आपदिमुञ्चेयुःस्वप्राणानपि नो नमन्त्यरीन् धीराः
भिद्येतदुर्वहभराक्रान्तो नमहान्नमेच्छिलास्तम्भः

8

सलिलानुगुणं कुमुदं, विद्यानुगुणंच सूक्ष्मविज्ञानम्
सुकृतानुगुणा संपत्, वंशानुगुणो गुणश्च संभवति

9

सज्जनविलोकनंहितमथहितमेषांचभाषितश्रवणम्
तद्गुणकथनंच हितं, हितएतेषां सदैवसहवासः

10

अहितंदुर्जनदर्शनमहितंतद्वचननिशमनंचतथा
अहितंतद्गुणकथनं, तत्सहवासो नृणामहितएव

11

शाल्यर्थं कुल्यासु प्रवहत्पाथः स्रवत्यपि तृणेषु
स्यादेकोऽपिहि सुजनो, वर्षंचतदर्थमखिलजनफलदम्

12

अङ्कुरकारणमपि तुषहीनश्चेत्तण्डुलो न रोहतिहि
अतिचतुरोऽपिसहायाद्विनानकर्माणिनिर्वहतिलोके

13

लघुगात्रोऽपिगुणीस्यात्,सुगन्धिबृहतोऽपिकैतकाद्बकुळं
अक्षाळनमब्धेर्जलमेतन्निकटेस्नुतं तु पानीयम्

14

शाखोपशाखिकाक्रमवृद्धा वृक्षा वनेषु नहि वृक्षाः
किन्तुनशक्ताःपठितुं लेखमपिमदस्यानिङ्गितज्ञाश्च

15

दृष्ट्वा बर्हिणनृत्तं कुक्कुटपाशोऽपि बर्हिणम्मन्यः
नृत्यत्यचारुपुछं वितत्य . मूर्खस्यरीतिरेष्येवम

16

व्याघ्रस्यरोगहर्ता भिषगेवहि जायतेऽशनं पथ्यम
उपकारःक्रूरजने पाषाणविघट्टितेव मृत्कलशी

17

प्रौढान्निगूढविद्यान्नमनुष्वाज्ञान् सुखेनचविजय्यान्
आपृथुमीनागमनादास्तेहिश्रान्तवद्बकस्सलिले .

18

सरसश्शोषे जलखगवद्धावन्तो न बन्धवो विपदि
किंतूत्पलकुमुदांबुजवत्सम्मिलिनास्तदापिचस्वजनाः

19

आपन्नोऽपिचसुजनःसुजनोहीनस्तुविपदिकीदृक्स्यात्
भिन्नोऽपिकनककलशःकनकं, भिन्नस्तुमृद्घटः कीदृक्

---

१. अक्षाळनम = अप्रशस्तं क्षाळनं येनेति अप्राशस्त्यमत्रनञर्थः

२. सदसि अनिङ्गितज्ञा इति पदविभागः

20

संमज्जितोऽपिजलधौ प्रस्थो न चतुर्गुणं जलं धत्ते
सखि! निधिसत्पतिलाभेसत्यपिसुखमात्मकर्मवशमेव

21

[२]तनुसंबन्धीसर्वोबन्धुर्न भवेत्, निहन्तिहि रुगीदृक्
ओषधिरपिगिरिजातारोगघ्नी,स्यात्तथा परोऽपि हितः

22

गृहिणी यदि गेहे स्यात्, अविद्यमानं न तत्र किञ्चिदपि
यदिनैषा, यदिचोग्रा, तद्गेहं व्याघ्रयुङ्महागुल्मम्

23

[३]कृतयोयथाऽजलिखितंफलन्ति, भोदीनहृदय!नयथेच्छम्
अप्यर्थितःसुरतरुःकिंपाकफलं ददातिधातृलिपेः

24

भिद्यन्ते सतिकोपे ग्राववदधमाः,सुवर्णवन्मध्याः
अंबुनि बाणक्षतवत् सद्यश्शाम्यति महात्मनां क्रोधः

25

प्राज्ञाः प्राज्ञान् हंसाः पद्मानिव सरसि समभिलष्यन्ति
मूढा मूढांश्चतथा काकाः कुणपानिव श्मशानेषु

---

२. तनुः = शरीरम् ॥
३. गुल्मम् = गहनम् ॥
४. कृतयः = पुरुषप्रयत्नाः ॥

26

भुजगः स्वविषं बुध्वा निलीयते, बहिरुपैति जलसर्पः
आत्मानं गूहन्ते सवञ्चनाः, नतु कदाचिदपकपटाः

27

सुतरां विवेचनायां सम्यग्विद्वान् नृपालतः श्रेयान्
राजा नमान्यते निजदेशादन्यत्र: सर्वतो विद्वान्

28

मृत्युर्विद्वद्वचनं मूढानां: पापिनां वृषो[1]मृत्युः,
मृत्युः फलं कदल्याः: मृत्युः पत्युर्गृहिण्यननुकूला

29

चन्दनकाष्ठं घर्षात् कृशमप्यन्यूनसौरभं भवति
भूपा वित्तविहीना अपि न भवेयुर्मनास्विताहीनाः

30

प्रियबन्धुता सुसम्पत् सुन्दरताचाभिजातताप्येताः
आगच्छन्ति कमलया साकं, गच्छन्तिचैनया सार्धम्

31

आमृति यथास्वशकनं[2] साधुजनाःद्रुह्यतोऽपि रक्षम्ति
आपतनं छिन्दद्भ्योऽप्यनातपेनोपकुर्वते वृक्षाः

॥ इति वागुल्लासः संपूर्णः

---

१. वृषः = धर्मः ॥
२. शकनं = शक्तिः ॥

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य.

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ नीत्युपाख्यानम् ॥

विजयताम्

NO. V.

THE

# NEETHYUPAKYANAM.

BY

RADHAKRISHNA SASTRIAR,

OF

PUDUKOTA.

Printed at the "Sri Vidya Press" Kumbakonam.

1894.

॥ श्रीमते ॥

॥ रामायनमः ॥

॥ अथ ॥

# ॥ नीत्युपाख्यानम् ॥

1 अखिलविघ्ननिवारणचातुरी
चणमुमास्तनपं निजशुण्डया
स्मरतु बालगजाननमेव मे
हृदयमन्वहमप्यनिभाक्तितः

2 हृदमुपासितवान् परमेश्वरं
विधिमपि प्रबलं जयति द्रुतम्
ननु मृकण्डुसुतश्शिवपूजया
सकलदुर्जयमप्यजयद्यमम्

3 परकलत्ररतः पुरुषाधमः
सविभवोऽपि शुभं न लभेत हि
सहबलस्ससुतस्सहबान्धवः
ससहजो व्यनशत् किल रावणः

4 न खलु संश्रयते मतिमान् जनः
चिरमसत्तमकर्मरतं प्रभुम्
ननु समत्यजदुत्पथवर्तिनं
दशमुखं सहजोऽपि विभीषणः

५ धुरि सतां स्वगुणस्तवने रतः
कृशमतिर्विनिपातमियाद्ध्रुवम्
भुवि ममज्ज हि नारदसन्निधौ[1]
स्वनवनान्ननु विन्ध्यमहीधरः

६ अखिलसंमतसत्पथगामिना-
मुपकृतौ सकलोऽपि यतेत हि
समभजन् किल चञ्चलबुद्धयो
रघुपतेः कपयोऽपि सहायताम्

७ बलवतः स्थिरयत्नवतश्च किं
न सुकरं भुवि कर्म महामतेः
जलनिधिं व्यतिलङ्घ्य समीक्ष्य च
क्षितिसुतां न्यवृतत् किल मारुतिः

८ निरपराधसहोदरबाधने
सकुतुको न भजेच्चिरजीविताम्

---

१. नारदसन्निधाविति = पुराकिल नर्मदाकूलस्थितस्य नारदस्य सन्निधौ विन्ध्यः स्वमेव सकलाचलोत्तमत्वेन तुष्टाव । कलहप्रियो नारदस्तु तर्हि सूर्यादयो ज्योतिर्गणास्सर्वेऽपि कथं मेरुमेव प्रदक्षिणाकुर्वन्ति । कथं वा तव शिरसि पादं क्षिपन्तीति विन्ध्यमाक्षिपत् । ततः क्रुद्धो विन्ध्यो ज्योतिर्गणनिरोधाय नितरां ववृधे ॥ ततो निरुद्धे ज्योतिर्गणे जगदुपप्लवशान्तये देवैरर्थितोऽगस्त्यो विन्ध्यं भूमौ निमज्जयामासेति काशीखण्डकथात्रानुसन्धेया ॥

कपिपतीरघुसूनुशरार्दितो
न हि किमम्रियताशु तथाविधः
9 स्थिरमतिर्दृढसङ्गर आत्मवान्
नृमणिरन्यथयेन्न गिरं निजाम्

वनगतो रघुनायक आययौ
न हि तदैव पुरं भरतार्थनात्
10 अनुभवेदिह को विषयान्मुदा

विधिवशाद्विसुखे निजपूर्वजे
समजहात् किल राज्यभवं सुखं

वनमिते भरतो भरताग्रजे
11 न विषहेत हि मानधनाग्रगो
जनदुरुक्तमहेतुकमप्यहो

सपदि राम इहात्यजदङ्गना
मपि सतीमपवादभयात्किल
12 स्थिरतरे यतने कलिते नृभिः
न हि किमप्यतिदुर्लभतामियात्

१. विसुखे = विगतसुखे ॥
२. निजपूर्वजे = स्वज्येष्ठभ्रातरि ॥
३. इते = प्राप्ते ॥
४. अङ्गनां = भार्या ॥

नकिमविन्दत नाकनदीं पुरा
स्थिरकृतिर्मनुजोऽपि भगीरथः

13 न हि विचारलवोऽपि सुमेधसां
गुरुगिरा विहितेषु हि कर्मसु
सपदि हिंसितवान् भरताग्रजः
कुशिकसूनुगिरा ननु ताटकाम्

14 विपदि संपदिवानुसरेत् समं
य इह पूर्वजमेष किलानुजः
नगरवद्विपिनेऽपि च लक्ष्मणो
जनकजाप्रियमन्वगमत्किल

15 विधिवशादुदिताऽपि महात्मनां
विपदपायमुपैति सपद्यहो
मघवजित्प्रहितं भुजगास्त्रम-
प्यपससार जवाद्रघुसिंहयोः

16 प्रकृतिदुष्टतमः परबाधनं
त्यजति नो मरणेऽपिसमीपगे
रघुपतिस्वरतः किल ताटका-[1]
सुत इळातनयां[2] समतापयत्

---

१. ताटकासुतः = मारीचः ॥

२. इळातनयां = सीताम् ॥

17 स्फुटमवैत्यपरोक्षमिव द्रुतं
शितमतिर्हि परोक्षमपि स्वयम्
दशमुखस्य हि भाविवधं विदन्
तदनुजाय ददौ रघुपः श्रियम्

18 न भवति क्षमया सदृशो महान्
गुणमणिर्[1]भुवनत्रितयेऽपि च
इह तदेकपरो हि युधिष्ठिरः
सुकृतकीर्तिधरेश्वरता अगात्

19 इतरदारविमाननसादरः
कथमियाच्छुभमण्वपि पूरुषः
द्रुपदराजसुताकचकर्षणात्
मृतिमगाद्धृतराष्ट्रतनूभवः[2]

20 वृजिनमेव पराजयकारणं
सुकृतमेव सदा जयकारणम्
न विजिताः किमु पाण्डुसुतैस्सुखं
सगुरवोपि[3] शतं धृतराष्ट्रजाः

21 गुणनिधिस्सुजनादपि जायते
जगति हन्त नृशंसतमस्सुतः

---

१. गुणमणिः = उत्तमोगुणः ॥

२. धृतराष्ट्रतनूभवः = दुश्शासनः ॥

३. सगुरवोऽपि = भीष्मद्रोणादिसहिता अपि ॥

अजनि विश्रवसो हि तपोनिधेः
कलुषकर्मरुचिर्दशकन्धरः

22 जगति योषित एव महापदां
वहुतया[1] प्रभजन्ति निदानताम्
किमु न मूलमशेषविपत्ततेः
दशमुखस्य हि शूर्पणखैव सा

23 युवतिमोहमनल्पमुपेयिवान्
व्रजति कष्टमसीम हि सर्वथा
दशरथो भुवि केकयसंभवा-
वशगतः प्रययौ बत कां दशाम्

24 अतिविपत्स्वपि देहमनुज्झतो[2]
भवति सौख्यमवश्यमनन्तरम्
जनकजाह्यविमुक्ततनुः पुरे
दशमुखस्य पुनः पतिमासदत्

25 अयमशङ्कमतीवमहात्मना-
मपिकळङ्कमुदाहरते जनः
भृशमपावदताशरनीतया[3]
सहयुजं रघुपं खलु सीतया

---

१. बहुतया = प्रायशः ॥
२. अनुज्झतइति जनस्येतिशेष.
३. आशरनीतया = राक्षसनीतया ।

26 विगुणनिर्दयघातुकजातितोऽ-
प्युदयते[1] महितस्सुत आत्मवान्
समुदभूदतिनिष्ठुरकैकसी
जठरतोऽपि महान् हि विभीषणः

27 मृदुतमं पुरुषं समुपेक्षते
परुषतस्तु बिभेति जनो भृशम्
कुशशयं समुपेक्ष्य रघूद्वहं
शरशयं[2] शरणं शरधिर्ययौ[3]

28 अननुकूलतमे प्रबले विधौ
हितवचोऽपि न याति हि हृद्यताम्
दशमुखाय तदा खलु नारुचत्
पवननन्दनमाल्यवदादिवाक्

29 बलवतां च महाबलवान् विधिः
स्ववशमानयते प्रबलानपि
असुखमन्वभवन् किल तद्वशात्
अतितरां नळरामयुधिष्ठिराः

---

१. उदयते = जायते ॥
२. शरशयं = बाणहस्तम् ॥
३. शरधिस्समुद्रः ॥

30 शरणमुत्तमपूरुषमाश्रितः
क इव नाश्रयते श्रियमुत्तमाम्
रघुपतिं श्रितवान् हि विभीषणः
सकलमङ्गळभाजनतामगात्

नीत्युपाख्यानं सम्पूर्णम् ॥

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ जयशक्तिकरम् ॥

विजयताम् ॥

**NO. VI.**

THE

# JAYASAKTHIKARAM

**VETRI VERKAI**

OF

ATHI VEERA RAMA PANDIAN

*Translated From Tamil Into Sanskrit.*

BY


**RADHAKRISHNA SASTRIAR,**

OF

**PUDUKOTA.**



Printed at the "Sri Vidya Press" Kumbakonam.

1894

॥ श्रीमते ॥

॥ सुब्रह्मण्यायनमः ॥

॥ अथ ॥

# ॥ जयशक्तिकरम् ॥

1 प्रणवार्थस्य महतः करपञ्चकशालिनः
विनायकस्य पादाब्जे मूर्ध्नो भूषां वितन्महे

2 विद्योपदेष्टा स्वगुरुः साक्षादेव महेश्वरः
विद्वद्भावस्य रम्यत्वं निरवद्यं सुभाषणम्

3 धनाधिकानां रम्यत्वं बहुबान्धवरक्षणम्
नृपालकानां रम्यत्वं नीत्या लोकस्य शासनम्

4 क्षोणीसुराणां रम्यत्वं स्वाध्यायश्च स्वनुष्ठितिः
वणिग्जनानां रम्यत्वं वृध्यर्हद्रव्यसङ्ग्रहः

5 कृषीवलानां रम्यत्वं कृषिजाहारकाङ्क्षिता
सचिवानांतु रम्यत्वं भाविनोऽर्थस्य वेदनम्

6 सेनाधिपस्य रम्यत्वमकातर्येण वर्तनम्
भोजनस्य तु रम्यत्वं गृहागतमजग्धिना

1. करचतुष्टयेन शुण्डयाच = करपञ्चकशालित्वम् ॥

7 सीमन्तिनीनां रम्यत्वं पत्युरप्रतिवादिता
कुलोद्भवाया रम्यत्वं भर्तृशुश्रूषणं मुदा

8 पण्याङ्गनानां रम्यत्वं वपुरुद्योतनं[1] सदा
विचक्षणानां रम्यत्वं ज्ञात्वा सद्वृत्तशालिता
अकिञ्चनानां रम्यत्वं सौशील्यं दुर्गतावपि

9 तालफलस्यातितरांबृहदापिबजिंक्रमेणपोषविशेषात्
अभ्रङ्कषतरुतामपि गत्वा छायां ददाति नैकस्यापि

10 नैयग्रोधफलस्य दभ्रवपुषो[2]ऽप्येकं सुसूक्ष्मं तनो[3]
र्मत्स्यस्याण्डकृशं[4]च बीजमुदयेच्चेदुच्चवृक्षात्मना
छायां तर्हि ददाति संवसतये हस्तीन्द्रराजद्रथ
प्रोत्तुङ्गाश्वपदातिसंवृतमहासेनायुजां भूभुजाम्

11 सर्वे वृद्धा न वृद्धाः स्युर्वृद्धास्तु ज्ञानशालिनः
कनिष्ठा न कनिष्ठाःस्युः, कनिष्ठा मन्दबुद्धयः

12 सर्वे प्रसूता न सुताः, किन्तु पुत्रा गुणोत्तराः
व्यूढाः सर्वा न पत्न्यः स्युः, किंतु पत्न्यः पतिव्रताः

13 सर्वेऽपि न स्युः स्वजनाः, किंतु प्रेमरसाधिकाः
सन्तप्तमपि गोस्तन्यं माधुर्यान्नैव हीयते

---

१. उद्योतनं = लावण्योत्पादनम् ॥
२. दभ्रवपुषः = कृशाकारस्य ॥
३. तनोः = कृशस्य ॥
४. अण्डकृशं = अण्डादपि कृशम् ॥

सुतप्तमपिच स्वर्णं क्षीयते न स्वरोचिषः
सङ्घृष्टमपि पाटीरं स्वगन्धान्नावहीयते

15 कालागरुर्धूमितोऽपि दुर्गन्धं जनयेन्न हि
आलोडितोऽपि वाराशिः पङ्किलो न भवेत् ध्रुवम्

16 कटुतुंबी क्षीरपक्वाप्युत्सृजेन्न स्वतिक्तताम्
लशुनं न सुगन्धि स्यात् बहुधाप्यधिवासितम्

17 एकं दिनं परिचयादपि वृद्धिमियात्सताम्
स्नेहो भूमितलोद्भेदिमूलव्याप्तमहीजवत्

18 मूर्खस्नेहः परिचये कृतेऽपिच शतं समाः
जले शैवालवत् बद्धमूलो जात्वपि नो भवेत्
दातृत्वतदभावाभ्यां स्यातामुच्चत्त्वनीचते

19 क्षुद्रैः कृतानां स्वल्पानां सर्वेषामागसामपि
मर्षणं हि स्वधर्मः स्यात् प्रकृत्यैव महात्मनाम्

20 कदर्या अपराधांश्चेत् यत्नात् कुर्युर्महत्तरान्
तेषां सहनमत्यन्तं महद्भिरपि दुष्करम्

21 विद्यैवमहती, विद्या महती सर्वथा सदा
भैक्षजीविजनस्थाऽपि विद्यैव हि महीयसी

22 विद्याहीनस्य मर्त्यस्य स्ववंशगुणकीर्तनम
शालिबीजसहोत्पन्नकडङ्गरवदेव हि

---

१. कडङ्गरवदिति = कडङ्गरस्य स्वसहोत्पन्नशालिबीजगुणकीर्तनमिवपरिहासास्पदमित्यर्थः ॥

23 चातुर्वर्ण्योत्तमे वर्णे जनिमानपि पूरुषः
भवेच्चेद्विद्ययाहीनो जात्याऽपिच तथाभवेत्
24 यत्किंचिद्वर्णजातोऽपि यःकोऽपि ज्ञानवान् यदि
महासभायां तं चोपचरेयुः स्वागतादिना
विद्याधिकं सार्वभौमोऽप्यभिलष्यति सर्वदा
25 सभाभयनिवर्तकप्रबलशास्त्रतत्त्वार्थधी-
विहीनपशुसाम्यभाक्सुतशतस्य लाभादपि
सुतप्रसवहीनताकलितमप्रसह्यं जनैः
वरं प्रबलदुःखमप्यहह तस्य वंशस्य हि
26 त्यागोधर्मश्च नो दीर्घकरस्यापिच दन्तिनः
मीलिताक्षस्य शान्तस्याप्यो[1]तोर्नैस्तस्तपःकृपे
27 नविद्येते खेदमोदावात्मतत्त्वविदां सदा
शि[2]थिलीनां विवेको न दातृभोक्त्रर्थगोचरः
28 ग्राहस्य नास्ति भेदोऽम्बु प्लवाहं मितमित्यपि
एवं भयं च लज्जाच मन्दानां नैव विद्यते
29 नक्षत्रवारादिकृतो विशेषो ना[3]मयाविनाम्
न सन्ति कुलहीनानां सखायो बान्धवा अपि

---

१. आतोः = बिडालस्य ॥

२. शिथिलीनां = वम्रिनामकानां कृमिविशेषाणां । अयंदातुरर्थः अयंभोक्तुरर्थ इति विवेकोनास्ति अपितु सर्वमपिनाशयंतीत्यर्थः

३. आमयाविनां = रोगिणाम् ॥

30 धनाढ्यत्वं दरिद्रत्वमपि नैकत्र सुस्थिरम्

31 श्वेतातपत्रछायायां यातवन्तोऽपि कुञ्जरैः
गच्छेयुः कंचन ग्रामं पादसञ्चारकर्शिताः

32 ऐश्वर्येण महोन्नत्या मानेनच युता अपि
धर्मान्नसत्रद्वाराणि विशेयुश्च विधेर्वशात्

33 धर्मार्थं दीयतां भिक्षेत्युच्चैर्याच्ञापरा अपि
राज्याङ्गैस्सहिता राज्यं पालयेयुश्च जातुचित्

34 पर्वतोपमभूयिष्ठधनभाजोऽपिपूरुषाः
सद्यस्सङ्क्षीणसर्वस्वा भवेयुश्च कदाचन

35 प्रासादास्सप्तभौमा[1]श्च पतित्वा मूलतो भुवि
भग्नाः खरप्रचा[2]राहैश्शून्यभूम्यो भवन्ति च

36 उद्वाहोचितमण्डनाभिरुचिरास्तन्व्योऽपि तत्रैव[3] हा
प्रेतालङ्कृतिभाज आत्मदयितस्याङ्गं स्पृशन्त्यो मुहुः
वैधव्यादिमकण्ठवस्त्रपद[4]वीमारोपयन्त्यश्शुभं
दीक्षावस्त्रमपि स्वयं प्रशिथिलां कुर्युश्च वेणीं निजाम्

---

१. भौमानि = प्रासादानांउपर्युपरितना कक्ष्याः ॥

२. प्रचारः = तृणभक्षणं ॥

३. तत्रैव = उद्वाहएव ॥

४. विवाहदीक्षावस्त्रमेव वैधव्योपक्रमे कण्ठक्षिप्तवस्त्रप्रायंदधत्यइ-
त्यर्थः ॥

37 गोगर्दभप्रकरचारभुवोऽपि कालात्[1]
सौवर्णकङ्कणलसल्ललनाकदंबैः
सल्लक्षणैश्च मनुजैः परिपूरितानि
धान्यव्रजैश्च निचितानि पुराणिच स्युः
38 निष्किञ्चनानां प्रकृतिर्याच्ञैव धनभाजिषु
धनिकानां स्वधर्मश्च द्रव्यत्यागोऽर्थिनां कृते
39 प्राप्तस्यापीह सम्पत्तीः परलोकेऽपि सद्यशः
गार्हस्थ्योचितसत्पत्नीमप्राप्तस्य न किञ्चन
40 धैर्यगांभीर्ययुक्तोऽपि स्वयं हस्ती बृहन्नपि
लगुडाद्रैणवादल्पात् बिभेति नतपर्वणः
41 महामहीध्रसंबाधे वसन्नपि महावने
कृष्णसारो भीरुवक्त्रस्त्रस्यति व्याघ्रतोऽनिशम्
42 नडैर्निबिडिते दीर्घैस्तटाके वारिपूरिते
निवसन्नपि मण्डूकस्त्रस्यत्येव फणाभृतः
43 अत्युग्रशासनाधीशशासिताद्देशतो वरम्
क्रूरहुङ्कारघोरास्यशार्दूलभवनं वनम्
44 ज्ञानवृद्धैर्जनैर्हीनप्राचीनपुरवासतः
मधुग्राहिमहाव्याधदेशवासो वरंवरम्
45 सायं प्रातश्चतुर्वेदपारायणपराङ्मुखः
ब्राह्मणो नाममात्रेण यःससर्वो बुसं ननु

---

१. चारः = तृणभक्षणम् ॥

46 व्यथयित्वा जनान् द्रव्यं सङ्गृण्हानः किरीटधृत्
नृशंसशासनो राजा यःससर्वो बुसं ननु

47 मूलद्रव्यैर्गृहीतानां भाण्डानां न्याय्यतः पणात्
जातान् लाभानभुञ्जान ऊरुजश्च बुसं ननु

48 बीजलाङ्गलसंपन्नोऽप्यालस्यात् कृषिहानितः
क्लान्तो बुद्धिविहीनश्च जनरससर्वो बुसं ननु

49 स्वधर्मपत्नीं संप्रेष्य तन्मातृसदनं प्रति
अलोकमानस्तां भूयो मन्दबुद्धिर्बुसं ननु

50 एकाकिनीं स्वभवने संस्थाप्य सहधर्मिणीम्
गन्ता परकलत्राणि ज्ञानहीनो बुसं ननु

51 स्वकीयमायुधं स्वस्य हस्तगंच धनं निजम्
अन्येषां हस्तसात् कुर्वन् बुद्धिहीनो बुसं ननु

52 वदनं पटहं कृत्वा जिह्वां कोणं[1] विधाय च
किंचिन्मया घोष्यमाणं शृणुतैकाग्रमानसाः

53 उक्तिसामर्थ्यतो मिथ्याऽप्याभात्येव यथार्थवत्
उक्त्यसामर्थ्यतःसत्यं मिथ्यावत् प्रतिभाति च

54 तस्मात्—श्रुत्वोक्तोस्समक्षकृत्वोऽप्यविकलमुभयो
वादिनोः[2] प्राड्विवाकः
सिद्धान्तं न्यायसिद्धं यदिच न कथयेत्
वादिनोस्स्वंमतंच

---

१. कोणं = वादनदण्डम् ॥

२. वादिनोः = वादिप्रतिवादिनोः ॥

वादे भग्नस्य तर्हि व्यथिततमहृदो
  वादिनो रोदनं[१] स्यात्
वंशच्छेदे महासिर्विधिहरहरिभिः
  पालितस्यापि तस्य[२]
55 निन्दाबीजं वस्तु निन्दामदत्वा नापसर्पति
विनाशार्हं च नापैति स्वाविनाशात् कदापि च
56 आवर्तैराव्रजत्तोयं किं स्यादूर्मिविनाकृतम्
ऋते सहायात् पन्थानं दवीयांसं नहि व्रज
57 विनोडुपं नांबुपूरं सुदूरं तर जात्वपि
स्वपर्णीभिः प्रकथितैरुपायैरपि दुष्करम्
58 कार्यमुद्दिश्य यतनं न कर्तव्यं कदापि च
सत्पथेनैव गच्छ त्वं तेनैव पुनराव्रज
59 एत एव महाधर्माः गन्तव्योऽध्वा महात्मनाम्
वर्धतां सकलं क्षेमं वर्धतामखिलं शुभम्

॥जयशक्तिकरं समाप्तम् ॥

---

१. रोदनं — अश्रुविमोचनं वंशच्छेदे महासिस्स्यादित्यन्वेति ॥
२. तस्य = प्राड्विवाकस्य ॥

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ तत्त्वपदवी ॥

विजयताम्

---

NO. VII.

THE

# THATHVAPADAVEE

## NULVALI, OF AVVAI.

*Translated From Tamil into Sanskrit.*

BY

RADHAKRISHNA SASTRIAR,

OF

PUDUKOTA.

Printed at the "Sri Vidya Press" Kumbakonam,

1894.

॥ श्रीरस्तु ॥

॥ परस्मैब्रह्मणेनमः ॥

॥ अथ ॥

# ॥ तत्त्वपदवी ॥

क्षीरं मधु स्वच्छनमं गुडं च
सूपं सुसंस्कृत्य निवेदयेऽहम्
मनोज्ञ हस्त्यानन! देहि मह्यं
वाचं पदार्थोभयतः स्फुरन्तीम्

धर्मो विधेयः परिहार्यमेनः
स्वकीयकर्मैव धनं प्रजानाम्
नेतोऽन्यदुक्तं विविधैर्मतस्थैः
अतो विपापं कुरु धर्ममेव

यथाविधानं वसुदानशीला
श्शीलालया जातित उत्तमाः स्युः
जात्याऽधमास्तद्विपरीतवृत्ताः
जातिर्द्विधैवमिदं हि तत्त्वम्

---

१. सुसंस्कृत्य = गोदकात्मनाविकृत्वा ॥
२. पदार्थोभयत स्फुरन्ती = पदस्फुरणार्थस्फुरणोभयस्फुरणवतीम्

4 वृथौदनध्वंसि शुचाश्च भस्त्रां
सत्यं न मन्यस्व शरीरमेतत
सद्भ्यो द्रुतं देहि तदीहितानि
मोक्षस्तवस्यादमलैकलभ्यः

5 केनापि किञ्चिच्च न कर्म साध्यं
बुध्या स्वपुण्यापरिपाककाले
तदा प्रयत्नोऽपि वृथाऽन्धदण्ड
क्षेपो यथाऽऽम्रे फलपातनार्थः

6 अप्राप्यमायाति न यत्नतोऽपि
न याति लभ्यंच निषेधतोऽपि
तथाऽपि नृणामतिदूरचिन्ता
शतोत्थबाधानुभवः स्वभावः

7 स्वकर्मनिघ्नं सुखमन्तरेण
नचानुभाव्यं परकीयसौख्यम्
एवंसति प्राणभृतां समुद्रे
गत्वाऽऽर्ज्य[1] वित्तानि किमागतेन[2]

8 विवेचनाद्धर्म्म हि सर्वथेदं
कृम्यामयस्तोमनिधिं विजानन्

---

१. आर्ज्य=सम्पाद्य ॥

२. आगतेन = आगमनेन ॥

प्राज्ञोऽब्जिनीपत्रपयोवदस्मिन्[1]
सज्जेत न. स्वां न वदेच्च रीतिम्[2]

9 यत्नैरसङ्ख्यैरपि भूरिवित्तं
नैवार्ज्यते कर्म निजं विलङ्घ्य
अप्यार्जितं नश्यति हे! महीस्थाः
सन्मार्गनिष्ठा नदिहार्जनीया

10 ग्रीष्मे नदी तापकमेकताऽपि
स्वान्तः स्नुतैः पाति जलैर्हि जीवान्
भृशं दरिद्रा अपि सत्कुलीनाः
न याचकेभ्यो नपदं[3] वदन्ति

11 अब्दान्बहून् भूलुठनैर्विलापैः
मृताःकिमायान्तिजना ! अलं तैः[4]
एषा दशा नश्च भवेद्धि, सङ्गः
कोऽवेति चाश्वं कृतदानभोगाः[5]

---

१. अस्मिन = वर्त्मणि ॥
२. रीतिं = अमङ्गलरूपाम ॥
३. नपदं = नेतिपदम ॥
४. तैः = भूलुठनप्रलापैः
५. एषामृतत्वदशाऽस्माकमपि भवेद्धि । मृतानां नश्वकोत्रासंबन्ध इति विचार्य कृतदानभोगास्सन्तः सुखमास्वमित्यर्थः

12 जहासि नैकं दिवसंच भुक्तिं
सकृन्न गृण्हासि दिनद्वयार्हाम्
तुन्द! व्यथादायक! वेत्सि नो मे
व्यथां, त्वया जीवनमप्यशक्यम्

13 सरित्तटस्थद्रुमवद्विनाशि
स्याज्जीवनं भूपतिसेवनोत्थम्
सर्वैःप्रशस्यं कृषिजं त्वतुल्यं
अन्यत्तु सर्वं[1] वहुदोषयुक्तम्

14 चिरायुषो हन्तुमलंभवेत्[2] कः
गतायुषो जीवयितुं च कोवा;
सदैव भिक्षामटतोऽपि मर्त्यान्
कश्शक्नुयान्मोचयितुं नियत्याः[3]

15 उक्त्वा स्वकामानिह संव्यथय्य
हृत्वा परस्माद्वसु भोजनं यत्
भैक्षाशनस्याग्रजमेव[4] तद्धिक्
असुव्ययो मानहृतेर्वरं हि

---

१. सर्वमिति = जीवनमित्यनुषज्यते ॥

२. अलम्भवेत् = समर्थोभवेत्

३. नियत्याः = नियत्यास्सकाशात् ॥

४. अग्रजमिति = लघुत्वेविषयेज्येष्ठमित्यर्थः ॥

16 नमश्शिवायेत्यनिशं शिवैक-
धियं नृणामाश्रयतां नचापत्
विधेर्जयोपाय इयं, च तत्त्व-
ज्ञानं. धियोऽन्यास्तु विधेर्वशस्थाः

17 पृथ्वीगुणाद्धाग्गुणः. प्रदानात्
सतां गुणो. नेत्रगुणः कृपायाः.
नारीगुणः स्थास्नुपतिव्रतात्वात
सर्वाभिनन्द्यो भवतीति विद्धि

18 पुराजनो पापहरे प्रदाने
निरादराणां मति पापवृन्दे
संपत् भवेत ? किंविधिदूषणेन?
रिक्ते घटे प्रोत्तपने न दुग्धम

19 पुत्रंच तातं जननीं स्वदेश्यं
बन्धुं सखायं च नपोषयन्तः
लुब्धाः परैश्चद्रुणिना ददन्ते
धनव्रजं. नो शरणीकृताश्चेत

---

१. इयं = शिवैकधीः ॥

२. नप्रोत्तपने = कथनजनितपुच्छग्रामं न प्राप्नोति ॥

३. ददन्त इति भौवादिकोऽयंददधातुः ॥

20 सेवार्थनामानन[1]वार्धियान-
कवित्वराज्यप्रमुखैश्शरीरम्
नयामहे निष्फलतां क्षुधार्त्या
कुक्षेर्वयं प्रास्थिकतण्डुलार्थे

21 पण्याङ्गनाप्रेम शिलासखस्य
नरस्य नद्यामवतारकल्पम्
अमुत्रचेहाप्यहितं धनानां
नाशस्य बीजं च बहुव्यथानाम्

22 पयस्समृद्ध्यालयधान्यराशि-
लाभप्रसिद्ध्युत्तमजीविकाश्च
ग्रामान् हिरण्यानिच दीर्घमायुः
अवञ्चकेभ्यः कमला ददाति

23 कृच्छ्रार्जितं वित्तचयं धरान्तः
निक्षिप्तवन्तो व्यथितास्सपापाः
भोभोमनुष्याः! शृणुता युषोन्ते
युष्माकमत्रानुभवेदमुं कः

24 मिलन्ति वेताळगणाः, सुपुष्प्य
न्त्यर्काः, प्ररोहन्ति हि मूलिकाश्च

---

१. माननं = श्लाघनम् ॥

ज्येष्ठाच सर्पाश्च वसन्त्यगारे
सपक्षपातं ब्रुवतां सभायाम्
25 शून्यं ललाटं भसितेन हीनं,
तथैव मृष्टाशनमप्यनाज्यम्,
अभ्रातृकं वर्म्म, विसिन्धु राष्ट्रं,
साध्व्या गृहिण्या रहितं गृहं च
26 कुर्याद्व्ययं मूलधनाधिकं यः,
स्यादेष मानेन धिया च हीनः,
दिगष्टके चौर्यपरश्च, पापी
जनुष्षु मप्तस्वमतश्च पत्न्याः
27 मानः कुलं सत्यमभिज्ञभावो
विद्या तपः स्पर्शनमुन्नतत्वम्
उत्साहवत्ता कलभाषिणीषु
प्रेमा च धावन्ति दश क्षुधायाम्
28 अभीप्सितं जातु न लभ्यतेऽन्यत्
सम्प्राप्यते जातुच लभ्यते तत्

---

१. ज्येष्ठा = ज्येष्ठादेवी ॥
२. विसिन्धु = नदीविरहितम् ॥
३. सप्तसु = अमत इति पदच्छेदः ॥
४. स्पर्शनं = दानम् ॥
५. अन्यत् = अनभीप्सितम् ॥
६. तत् = अभीप्सितम्

अतर्कितं[1] चाप्युपतिष्ठतीति,
यत्नाः किलैते जगदीश्वरस्य

29 भोज्यं नृणां प्रास्थिकधान्यमेव
वास्यश्चतुर्हस्तपटस्तथापि
क्लिश्नन्ति कोटीः[2] प्रविचिन्त्य मूढाः
आ जीवितात् तत्[3] किल मृद्धटीव

30 वृक्षेषु पक्वेषु फलेषु नैवा-
ह्वयन्ति लोका जंतुकास्ससान्त्वम्[4]
वत्साय गोवद्ददतामभीष्टं
निर्वञ्चनं स्युस्सकला अपि स्वाः[5]

31 पुराकृतं कर्म निजं हि भोग्यं
स्वेनैव भो धातृलिपेर्नृपालाः!
कुर्याम शत्रून् प्रति किं, विधिर्हि
संभूय सर्वैरपि दुर्विलङ्घ्यः

---

१. अतर्कितं = कदाप्यनालोचितम् ॥

२. कोटीः = विषयानिशेपः ॥

३. तत् = जीवितं मृद्धटीव नश्वरमित्यर्थः ॥

४. जतुकाः = अजिनपत्त्रापरनामकान् रात्रिचरान् फलभक्षिणः पक्षिविशेषान् ॥

५. स्वाः = बन्धवः ॥

32 पद्यात्सदोषाद्धरमेव गेयं
सद्वृत्तभावोऽप्यभिजातभावात्
शौर्यात्सभङ्गादपि रुग्णताच
वियोगिता निर्भयदारयोगात्

33 धनं सरित्सैकतगाधनिम्न
भावोपमं नश्यति वर्धतेच
द्रव्यं जलं चान्नमतो मनुष्याः!
तद्धर्मयोगाद्धृदयं विशुध्येत्

34 भिन्द्यात् गजघ्नोऽपि शरो न तूलं
जयेन्नचोग्रं वचनं मृदूक्तिम्
अयोघनाभेद्यमहाशिलापि
भिद्येत रोहत्तरुमूलजालैः

35 सर्वेऽप्यविद्वांससपीह वित्तैः
समृद्धमेत्योपचरन्ति मर्त्याः
मातापि भार्यापि न निस्वमिच्छेत्
वचांसि तस्याफलतां व्रजन्ति

36 फलन्त्यपुष्पास्तरवोऽपि केचित्
अबोधिताः केऽपि विदुर्नरांश्च

---

१. गेयस्य सदोषत्वेऽपि गानरसादुत्कर्षो भवतीति भावः ॥

२. प्रत्युतमृदूक्त्यैव उग्रवचनं जीयत इत्येतद्प्रस्तुतप्रसंगंमया प्रतिपादयति ॥ अयोघनेति ॥

उप्तानि बीजान्यपि कानिचिन्नो
फलन्ति, मूढेष्वपि बोधनानि

37 कुळीरशुक्तित्वचिसाररंभाः[1]
तन्वन्ति काले प्रसवान्[2] विनंष्टुम्
नराश्च विद्यावसुबुद्धिनाशेऽ-
भ्यर्णेऽभिवाञ्छन्तिवधूः परेषाम्

38 शास्त्रेषु वेदप्रमुखेषु नोक्ता
युक्तिर्विजेत्री नियतेः फलानाम्
तच्चिन्तनां विद्धयफलां मनो! मे
जितानि तान्यूर्जितचित्सुखस्थैः

39 त्रिंशात्पुराऽब्दात् सुविनिर्मलस्सन्
स्वंब्रह्म चेन्नानुभवेन्मनुष्यः
शाब्द्येव[3] धीश्शास्त्रकृताऽस्यतर्हि
तनुर्गळेत् स्त्रीस्तनवज्जरत्वे

१. त्वचिसारो वेणुः ।

२. कुळीरशुक्त्योः प्रसवो गर्भमोचनम् ॥ त्वचिसाररंभयोः पुष्पफले ॥

३. शास्त्रजनिता शब्दानुविद्धैव ब्रह्मधीर्भवति। न तु निरुपाधिकेत्यर्थः॥

10 असाधु साधु स्वयमन्य एषः
कार्यो नचासाविति भेदबुद्धेः
हानौ स्वमेवात्मतया विभायात्
नडान्नभिन्नं नडबन्धदाम

11 श्रुत्यन्तशारीरकसूत्रगीता-
पुराणबृन्दार्षनिबन्धनानि
श्रीशङ्कराचार्यमुखार्यवाचोऽ-
प्येकार्थतां यन्ति, विनिश्चिनुष्व

तत्त्वपदवी सम्पूर्णा ॥

---

१. असाधुत्वसाधुत्वस्वत्वान्यत्वकार्यत्वाकार्यत्वादिरूपभेदबुध्यात्मकस्य विक्षेपस्य सहावरणेन नाशे स्वात्मैवाद्वितीयब्रह्मात्मनाऽनुभूयतेत्यर्थः

२. नडाख्यतृणविशेषच्छेत्तारो जना नडबन्धनाय नान्यद्रज्ज्वादिकमपेक्षन्ते । अपि तु तैरेव तान् बध्नन्तीति प्रसिद्धिः । तथा च यथा नडानामेव बध्यत्वं बन्धकत्वं च तथा वेदितृब्रह्मात्मन एव वेद्यब्रह्मात्मकत्वं भवतीत्यर्थः ॥

॥ श्रीरस्तु ॥

नवसालपुराभिजनस्य

राधाकृष्णशास्त्रिणः

कृतिषु.

# ॥ सन्मार्गदर्पणम् ॥

विजयताम्

**NO. VIII.**

THE

# SANMARGADARPANAM.

**NANNERI OF SIVAPRAKASA SWAMI.**

*Translated From Tamil Into Sanskrit.*

BY

RADHAKRISHNA SASTRIAR,

OF

**PUDUKOTA**

Printed at the Sri Vidya Press, Kumbakonam.

1894

॥ श्रीरस्तु ॥

॥ महद्भ्योनमः ॥

॥ अथ ॥

# ॥ सन्मार्गदर्पणम् ॥

1 विद्युत्प्रभावहजटाभरभासिमौलेः
विघ्नेशितुः प्रणमनाद्विहतान्तरायः
पद्यैर्युतं शुभतमैः किल विंशतिभ्यां[1]
सन्मार्गदर्पणमहं कलये प्रबन्धम्

2 गत्वा स्वयं ददति जात्वपि चास्तुवद्भ्योऽ-
प्यर्थं प्रियं कुसुमशोभिकचे! विदोषाः
लब्धानि पाणिकमलं रुचिराणि भोज्य-
वस्तूनि यच्छति मुखाय किमात्मतुष्ट्यै

3 वाणी सुनिर्मलधियां कठिनापि हृद्या
रम्यापि दुष्टमनसां परुषेति विद्याः[2]

---

१. विंशतिभ्यां = चत्वारिंशतेत्यर्थः ॥
२. विद्याः = विद्धि ॥

क्षिप्ता शिलाऽस्वदत भक्तिमता शिवाय,
किं पुष्पमिक्षुधनुषा[1] कथयेस्सुफाले!

आदित्सवः कृपणतस्तदभीष्टवस्तु-
द्वारेण वित्तमखिलं कुशला लभेरन्
सङ्गृह्णते किल पयो मनुजास्तदिष्ट-
वत्सेन गोस्सितगरुत्[2]कमनीययाने !

अप्यन्यदीयमतिलुब्धधनं निजं हि
तेनैव लोकपरितोषणलालसानाम्
हृत्वाम्बुधेरनुपयुञ्जत एव नित्यं
पाथांसि मेघनिकरा वितरन्ति वृष्ट्या

6 सख्यंद्वयोस्सुविरहासहयोरपीह
भग्नप्ररूढमथ चेन्नहि तद्दृढीयः
विश्लिष्य किञ्चिदिव तण्डुलतः पुनश्च
श्लिष्टस्तुषोपि यदि, तद्दृढता विनश्येत्

7 जायापती प्रणयिनावपवैमनस्यं[3]
युक्त्वैव कर्म निरवद्यतमं विधत्तः

---

१. इक्षुधनुषा = क्षिप्तं पुष्पं शिवायास्वदतकिमित्यनुषङ्गेणान्वयः ॥
२. सितगरुतो हंसाः ॥
३. अपवैमनस्यं = निर्वैमत्यम् ॥

सम्पूर्णचन्द्रवदने! नयने प्रपश्य
वस्त्वेकमेव हि विलोकयतो मिलित्वा
८ विद्याम्बुराशय इमे वयमित्यखर्वं
गर्वं न मज्जयत कूमरिवत् बुधाः! स्वम्[1]
गर्जन् भयङ्करतमोऽपि महापयोधिः
आसीद्धि कुम्भजमुनेश्चुलुकेन पेयः
९ संव्याप्य चित्तमुदयं भजतः प्रकामं
कोपस्य संशमनमेव महान् गुणः स्यात्
संरोधनं किमु सुदुष्करमम्बुपूर-
स्योत्साग्णं किमभिनोऽप्युत कूलभेदात्[2]
10 च्छेदाश्रयेन प्रबलमल्पबलोऽपि जन्तुः
शत्रोः स्वतो बलवतोऽपि स नो बिभीयात्
सर्वाभिपूज्यशिवमूर्धजटाभरस्थः
चक्षुश्श्रवास्त्रसति किं विहगाधिराजात्
11 स्वां न्यूनतामपि निहन्तुमनीहमानाः
तां वारयन्ति सुजना दययाऽन्यदीयाम्
नैजं कलङ्कतिमिरं नजिहासुरिन्दुः
लोकस्य नाशयति सन्ततमसं नभस्थः
12 आपाततः सुमधुरा विषया असत्याः
सन्तापयेयुरमनीन्, न तु शुद्धबुद्धीन्

१. स्वम् = आत्मानम् ॥ २. सुदुष्करपदस्य चतुर्थपादेऽप्यनुषङ्गः ॥ ३. भेदात् = पाटनात् ॥

चक्रानिलो लघु तृणं भ्रमयेत् स्वशक्त्या
किं स्तम्भमौपलमसौ चलयेदनल्पम्

13 द्वारैर्युते नवभिरत्र वपुष्यसूनां
स्थित्रा खलु स्थितिरतीव परिप्लवानाम्
वारामनन्तसुषिरे कलशे प्रतिष्ठा
चित्रा, स्तुतिः किमु तथा मणिचित्रभूषे!

14 श्रेष्ठाः स्वसम्पदुदयापचयानुसृत्या
विश्राणयन्ति कृपया वसु मार्गणेभ्यः[1]
ज्योत्स्नां प्रसारयति हि स्वकलानुसारं
शीतद्युतिर्विकचवारिजवल्गुवक्त्रे !

15 हृष्यन्ति नैव कृतिनो वयमन्तहीन
संवर्धमानविभवा अजानिष्महीति
भृङ्गोपगीतसुममाल्यधरे! सुमेरो-
रप्येकदा किल बभूव विनम्रभावः

16 अत्रैव कीर्तिसुकृते अनभीप्सतोऽर्थः
को वा स्थलेन[2] वसुनाऽपि च भृत्यवर्गैः
मूकस्य किं फलमिहास्ति पुराणशास्त्रैः
अन्धस्य दीपनिकरैः किमु वा सुशीले!

---

१. मार्गणेभ्यः = याचकेभ्यः ॥
२. स्थलेन = गृहादिनिर्माणयोग्येन भूतलेन ॥

17 आत्मानमात्ममहिमानममन्यमानः
श्रेष्ठो जनोऽधमतमानपि संश्रितान् स्वम्[१]
गत्वाऽपि तच्छुचमपाकुरुते, समीप-
कुल्यां न गच्छति किमम्बुनिधिः स्वपूरैः

18 दानात् पिताऽभजत निर्धनतां ममेति
दातुस्सुताः प्रविरमन्ति किमु प्रदानात्
विश्राणनात् फलततेः कदलीं विपन्नां
दृष्ट्वाऽपि बालकदली च फलानि दत्ते

19 मोदेत सौम्यवचनैरखिलोऽपि लोकः
हृष्येत् कदापि न हि निष्ठुरवाक्यजालैः
वार्धिः समुच्छ्वसिति शीतरुचो मयूखैः
शिञ्जत्सुवर्णकटके ! न तु तिग्मरश्मेः

20 स्मेरानना बुधजनाः सुजनागमेन
नन्दन्ति, दुर्मतिजनागमनाद्व्यथन्ते
द्रागुल्लसन्ति मलयानिलतो रसालाः
ताम्यन्ति चण्डपवनागमनात्तु सद्यः

21 मत्वा परस्य रुजमात्मवदेव[२] सन्तः
चित्ते द्रवन्त्यनलतप्तघृतेन तुल्याः
अङ्गान्तराणि घनरोगनिपीडितानि
नेत्रे निरीक्ष्य रुदितो मृदुलाखिलाङ्गि !

१. स्वं = आत्मानम् ॥ २. आत्मवत् = आत्मन इव ॥

22 अव्याकृतिज्ञजनबोधसमृद्धिराशु
सर्वोऽपि नश्यति हि तद्ज्ञबुधावलोके[1]
शास्त्रज्ञचिन्तितगिरीशकपर्दभारे
दृष्टे शशाम हि वियत्सरितो विलासः

23 नीचत्वमुच्चतमताऽपि च बोधतार-
तम्येन सम्भवति, नो जनिदेशमात्रात्
को[2] वा मणिं फणिजमप्यवलोक्य जह्यात्
क्षीरार्णवोत्थमपि को विषमाददीत

24 सल्लापमात्रमपि वा वनितासु शश्वत्
सन्तन्वतीषु पुरुषस्य तपोनिदानम्
धैर्यं हृदः परिगळेत्, उपलोऽपि कालात्
निम्नो भवेत् गमनतोऽपि पिपीलिकानाम्

25 सत्स्वप्यसीमसु नृणां सुगुणेषु याप्याः[3]
तद्दोषमेव परिगृह्य मुहुर्भणन्ति
भृङ्गास्सुमेषु शयनं प्रमदावनेषु
वाञ्छन्ति, तेषु खलु निम्बफलानि काकाः

---

१. तद्ज्ञ = 'व्याकृतिज्ञ ॥
२. नोजनिदेशमात्रादित्येतत्परं दृष्टान्तेन विवृणोति ॥
कोवेति ॥
३. याप्याः = अधमाः

26 प्राज्ञा अपि स्वयमुपाश्रितबालिशाश्चेत्
स्वं गौरवं विगळयन्ति शशाङ्कवक्त्रे!
बाणोपमाक्षि! सुलघूडुपसम्प्रबद्धं
तोये गरिष्ठमपि वस्तु लघूभवेद्धि

27 देहे कृशेऽपि मति सूक्ष्मधियां तदीयं
विद्याब्धिपूरमिह केऽपि न लङ्घयन्ति
दृग्ज्योतिरक्षिमितमेव किमस्ति बाले!
किं वा स्वगोचरनभोवृतलोकमात्रम्[1]

28 अप्रेप्सवः प्रतिफलं सुजनाः परेभ्यः
कुर्युस्तमामुपकृतिं श्रमतोऽपि माध्याम्
सञ्चर्व्य भक्ष्यनिवहं कठिनं दिशन्ति
दन्ता रसान् सुमधुरान् रसनेन्द्रियाय

29 रोपेऽपि पण्डितजना वितरन्त्यभीष्टं
मन्दा न किञ्चिदपि वस्त्वपि वा प्रसादे
मोचा रसं ददत आत्मशलाटुकैश्च
किम्पाकभूरुहचया न फलैश्च पक्वैः

30 ईशानुरक्तहृदयाः स्वशरीरपीडाः
कोट्या[2] मिताअपि विचिन्त्य न बिभ्यतीह

---

१. लोकमात्रं = लोकप्रमाणकम् ॥
२. कोट्या = कोटिसङ्ख्यया

गानाभिराममृदुवाणि! विधोः कुरङ्गः
शार्दूलतः किमु बिभेति महीतलस्थात्

31 नासन्न एव शमनेऽसुहरेऽतिघोरे
पुण्यानि पङ्कधिय आर्जयताशु मर्त्याः !
प्रागेव दीर्घघनसेतुकृतो प्रमत्ताः
किं कुर्युराव्रजाति दुस्तरवारिपूरे

32 सन्तः परव्यसनकृद्विपदोऽपि धैर्यात्
स्वीकृत्य चैतदवनाय जवाद्यतन्ते
देहोपरि प्रसजतो लगुडप्रहारान्
गृह्णाति हि स्वयमुपेत्य जवेन हस्तः

33 शास्त्रार्थतत्वसुविवेचनहीनधर्माः
कस्तूरिकाङ्कनिटिले! न दृढा भवन्ति
सारांशगाढतमम र्गळमात्रहीनं
विन्देत किन्नु सुतरां दृढतां कवाटम्

34 अर्हन्त्यनात्मविद एनस आत्मरक्षां
गर्हात्ययाय, न तु तां कलयान्ति तद्ज्ञाः
विन्दन्त्यनल्पतटगुप्तिमहो सरांसि
किं विद्यते सुतनु! सा तु पयोनिधीनाम्

---

१. परव्यसनं = परेषां दुःखं
२. एतदवनाय = परेषामवनाय
३. तद्ज्ञाः = आत्मज्ञाः

35 यायुर्भयं नयविदो जनगर्हणायाः
चन्द्रार्धरम्यनिटिले! न तु बुद्धिहीनाः
रूपावलोकनकलाचतुरे विभीतो
दृष्टी महान्धतमसात्. न किलान्धनेत्रे

36 ज्ञातार एव हि सदा स्पृहयन्ति विद्भ्यः
नैवेषदप्यहह मूर्खजनाः कदापि
क्षीरं फलानि ननु कामयते कदल्याः
नो काञ्जिकं भृशतमाम्लमनूतनं च

37 पात्राय देयमसते तु न हीति बुद्ध्वा
धर्मातिगाय ददते वसु नो महान्तः
शालिभ्य एव सलिलान्युपयुञ्जतेऽत्र
नारण्यशुष्यदुलपेभ्य इभेन्द्रयाने!.

38 आत्मस्तुतिप्रवणधीर्महतां पुरस्तात्
द्रागर्घीयते स्वमहिमापचयेन दुर्धीः
प्राक् कुम्भजस्य पुरतःस्तुतवान् स्वमुच्चैः
विन्ध्यो ममज्ज धरणौ. ननु! किं न वेत्सि

39 मैत्री सतामनुदिनं सुखदा निकामं
वर्धेत. नैवममतां शृणु सद्गुणाढ्ये!

१. यायुः = प्राप्नुयुः ॥
२. नयविदः = शास्त्रज्ञाः ॥
३. उलपेभ्यः = तृणेभ्यः ॥

कालाच्छलाटव इमे सुफलीभवन्ति
सम्पक्किमाः किसलयास्तु कथं भवेयुः

40 स्नेहोऽसतामतिदृढोऽपि मनोज्ञ आदौ
पश्चात्तु खेयदति दीर्घसहासिकायाम्
आयासपोषितमहाव्रततीसुमौघो
ह्यास्ते विकासदिन एव मृदुस्सुगन्धिः

41 भूपास्सुवर्णमणिमण्डनशालिनोऽपि
नैवोपयान्ति तदभूपितसूरिसाम्यम्
अङ्गान्तराण्यपि विभूषणभूषितानि
विन्दन्ति नो तदपरिष्कृतनेत्रतौल्यम्

॥ इति सन्मार्गदर्पणं समाप्तम् ॥

॥ श्रीरस्तु ॥

॥ ईश्वरायनमः ॥

॥ अथ ॥

# ॥ नीतिपञ्चाशत् ॥

1 सर्वस्यादिं सर्वभूतान्तरस्थं
सर्वज्ञं तं सर्वशक्तिं महेशम्
नत्वा भक्त्या नीतिपञ्चाशदाख्यं
ग्रन्थं कुर्वे सर्वलोकात्मलीनम्

2 सर्वेशानस्सद्गतिर्दुर्गतिश्चा-
धर्मो धर्मस्स्वस्य जन्मान्तरं च
बन्धो मोक्षश्चात्मनोऽस्तीति सम्यक्
चित्ते गाढं निश्चयं सन्तनुष्व

3 स्वस्यानिष्टं दुस्सहं यो व्यतानीत्
तस्यानिष्टं चापि मा चिन्तय त्वम्
यात्वन्यस्यानिष्टसञ्चिन्तना, सा
स्वस्मा एवानिष्टदा पर्यवस्येत्

---

१. सर्वेश्वर ,सद्गति, दुर्गति, धर्माधर्म, जन्मान्तर, बन्ध, मोक्षाणां आस्तत्वानिश्चयं कुर्वित्यर्थः ॥

4 दृष्ट्वाऽन्यस्यासह्यमत्याहितं त्वं
वन्हिज्वालाव्याप्तवत् तापभाक् सन्
धैर्यात्तूर्णं तन्निवृत्त्यै यतस्व
क्लेशानीशस्ते निरोद्धुं यतेत

5 विद्यां शीलं सुन्दरत्वं समृद्धिं
दृष्ट्वाऽन्येषां धत्स्व मोदं महान्तम्
ईर्ष्यान्धत्वं जात्वपि त्वं न विन्देः
नैवेर्ष्यातो हृन्मलं विद्यतेऽन्यत्

6 मर्त्येऽन्यस्मिन्नस्ति चेत् कोऽपि दोषः
तर्ह्येनं त्वं निर्जने प्राप्य देशे
दोषं तत्सम्भाव्यमप्यार्तिजालं
प्राबोध्यामुं मुक्तदोषं तनुष्व

7 नृणां श्रोत्रप्लोषकं चापि वाक्यं
प्रोक्तं सत् चेद्बोधि तेषां महार्थम्
अप्रोक्तंसत् चेदनिष्टावहं वा
गत्वा ब्रूयास्तत्प्रसह्यापि तूर्णम्

8 ईशस्यैते मूर्तिभेदा इति त्वं
मत्वा पूज्यान् सन्नम श्रद्धयैव
ईशायास्मच्चित्तगायेति मत्वा
सङ्गृह्णीया वन्दनं क्लृप्तमन्यैः[1]

---

१. क्लृप्तं = रचितम् ॥

9 वाणीं ब्रूया नानृतां लीलयाऽपि
स्वोक्तेर्दाक्ष्यान्नापि सत्यापयैनाम्[1]
एका वाणी चेदसत्या प्रयुक्ता
सा कोटीस्तास्सञ्चिनोति[2] स्वासिद्ध्यै

10 दोषान् ब्रूया नेतरेषां परोक्षे
पैशुन्यं न प्राप्नुयाः पार्थिवेषु
नोद्गृह्णीया भीषयित्वा धनौघं
निर्नाथानां मूढभूयं[3] गतानाम्

11 धूर्तैः स्वामिद्रोहिभिर्वञ्चकैश्च
स्तेनैर्हिंसातत्परैर्मद्यपैश्च
ईर्ष्याविद्भिस्सूचकै भ्रान्तचित्तैः
सङ्गच्छेथा नो बहुद्वेषभाग्भिः

12 वृद्धान् रुग्णानङ्गहीनान् कुरूपान्
विद्याशून्यांश्चाधिकाङ्गान् दरिद्रान्
जात्या नीचांश्चापि तद्दोषवादैः
तप्तस्वान्तान् मा तथास्त्वं[4] कदापि

---

१. सत्यापय = सत्यां कुरु ॥
२. ताः = असत्यवाणीः ॥
३. मूढभूयं = मूढत्वम् ॥
४. मातथाः = माकुरु ॥

13 आचार्ये वा व्याधिते वा पशौ वा
बाले वृद्धे भारवाहे स्त्रियां वा
आगच्छत्सु स्वाग्रतो मार्गमध्ये
दत्त्वा तेषां वर्त्म गच्छापसृत्य

14 इच्छां यच्छन्त्यप्यनारम्भकाले
पापा चेष्टा प्रक्रमे भीतिदात्री
अन्ते चार्तिं भूरिमेव प्रसूते
संमृश्यैवं बुद्धितो द्राक् त्यजैनाम्

15 पत्नीं पुष्पैश्चन्दनैरम्यवस्त्रैः
भूषाभिश्च प्रीणयाभीक्ष्णमेव
तस्यास्तोषे सम्भवेत् गेहसौख्यं
तोषाभावे नो भवेत् किञ्चनापि

16 गेहं प्राप्तां स्वस्नुषामात्मजावत्
प्रीत्याऽभीष्टापादनादाद्रियस्व
नोचेत्, क्लेशादश्रुमत्यां तु तस्यां
दग्धं दावग्रस्तवत् त्वत्कुलं स्यात्

17 पुत्रीं दत्त्वा सद्गुणायैव पुंसे
वारंवारं लालयेश्चेलमुख्यैः
पित्रोर्गेहादागतं वस्तु यद्वत्
तस्याश्चित्तं मोदयेन्नो तथाऽन्यत्

18 पत्न्यास्स्वस्य प्रीणनं सौख्यवृद्ध्यै
पुत्र्यास्स्वस्याः प्रीणनं श्रीसमृद्ध्यै
वंशोन्नत्यै प्रीणनं स्वस्नुषायाः
मातुस्सम्यक्प्रीणनं सर्वसिद्ध्यै

19 दीदांसेथा[1] अन्यदीये गुणौघे
मीमांसेथा[2] दोषबृन्दं स्वनिष्ठम्
शीशांसेथास्स्वां[3] मतिं शास्त्रतत्वे
बीभत्सेथास्सर्वदा[4] पातकेभ्यः

20 मैवस्तावीस्सद्गुणांस्तावकीनान्
अल्पीभावं प्राप्नुयुस्त्वन्नुताश्चेत्
अन्यैस्त्वेते प्रीतिपूर्वं स्तुताश्चेत्
अप्यल्पास्ते स्युः प्रकामं महान्तः

21 धर्मस्यार्थस्यापि कामस्य मुक्तेः
प्राप्तौ मुख्यं साधनं देहमेतम्
गोपायेस्त्वं यत्नतस्सावधानो
नाक्रामन्ति व्याधिभेदा यथाऽमुम्

१. दीदांसेथाः = ऋजूभव ॥ गुणानां द्रोग्धीकरणे मा प्रवर्तस्वेत्यर्थः ॥
२. मीमांसेथाः=जिज्ञासस्व ॥
३. शीशांसेथाः = निशितां कुरु ॥
४. बीभत्सेथाः = जुगुप्सस्व ॥

22 प्रातःप्रातर्घोटकारोहणंवा
व्यायामं वा पादतो वा प्रचारम्
कुर्याः, तेनत्वद्वपुर्दार्ढ्यमृच्छेत्
उत्पद्येत क्षुत्, विनश्येच्च रोगः

23 उष्णांशोर्वा शीतगोर्वा मयूखै
रस्पृष्टेनाव्यापृतेनापि वातैः
पङ्कैः कीटैर्जीर्णपर्णैश्च वारा
मंव्याप्तेन स्नाहि मा व्याधिदेन

24 व्याहार्षीर्मा व्याधितस्योपकण्ठे
व्याधेर्भेदांस्तद्भवानार्तिभेदान्
रोगैस्तैस्तैः प्राङ्मृतस्यापि वार्ता
तन्मृत्युं[1] वा निश्चितं चापि वैद्यैः

25 प्रातः स्नानं वर्धकं देहकान्ते
रालस्यस्योच्छेदकं क्षुत्प्रदायि
आरोग्यस्यात्यन्तहेतुं निदानं
पुण्याचारस्यापि मैव प्रहासीः

26 विद्या धर्मो गौरवं कीर्तिसौख्ये
धैर्यं बन्धुस्नेह इष्टार्थसिद्धिः
जेतृत्वं चावाप्यते वित्तलाभात्
वित्तंतस्मादार्जयेर्यत्नतोऽपि

---

१. तन्मृत्युं = व्याधितस्यमृतिम् ॥

27 यद्वद्दीपादेकतः कोटिदीपा
उत्पद्यन्ते, तद्वदेवेह विद्या
वृद्धिं धत्ते शिष्यपारंपरीतो
विद्यार्थिभ्यस्तत्सदा देहि विद्याम्

28 प्रायो वन्ध्यास्वैरिणीभिर्विहीने
पुत्रीमात्रोत्पत्तिसंवर्जिते च
कुष्ठप्रख्यैर्व्याधिमुख्यैर्विहीने
वंशे जातां कन्यकामुद्वहस्व

29 मृत्युं मत्यास्सत्यशत्रुं सगर्व्यं
मिथ्यावाचो मातरं पातकस्य
तातं स्तेयस्यापि दारिद्र्यदूतं
द्यूतं हेतुं संयुगस्य त्यजाशु

30 पुण्याकाङ्क्षैः पापदूरैर्दयाढ्यैः
धीरैः प्रौढैर्नित्यतृप्तैर्विरागैः
विद्यावद्भिश्शुद्धचित्तैस्सुशान्तैः
संसृज्येथास्सर्वदा साधुलोकैः

31 षिड्गस्नेहं मद्यमांसादिसक्तिं
चौर्यं रोगं प्राणिहिंसामसत्यम्
वंशोच्छेदं चात्मनो द्रव्यनाशं
यच्छन्तं द्राक् जारभावं जहाहि

32 उत्पाद्यन्ते व्याधयोऽहस्तु सुप्त्या
नक्तंस्वापो हन्यते रोगहारी
आलस्यं चोद्भाव्यते सर्वविघ्नः
तस्मात् त्याज्या सा त्वया यत्नतोऽपि

33 रात्रिस्वापं मा निरुन्ध्याः क्रियाभिः
तेनैव स्यादूर्जितं देहसौख्यम्
पश्चार्द्धेषु स्वापतोऽपि क्षपाणां
स्वापोऽत्यर्थं पूर्वरात्रेषु पथ्यः

34 मातापित्रोः पालनं वृद्धतायां
आचार्येभ्यो दक्षिणाद्रव्यदानम्
लोभान्नोचेदाचरेस्तर्हि ते स्यात्
आकिञ्चन्यं भूरि जन्मान्तरेषु

35 मा त्वं नावीर्धर्मजातं स्वकीयं
मा निन्दान्यैः प्रीतितो दत्तमन्नम्
मा विस्मार्षीरन्यक्लृप्तोपकारं
लीनः श्रौषीर्मा रहस्यं परेषाम्

36 कोपोद्रेकोत्पादकश्चापि मन्तुः
भूपालेनाकारि चेत् ते महीयान्
निष्कोपस्सन् तं यथैव क्षमेथाः
तद्वत् पित्रोस्सङ्क्षमस्वापराधान्

37 धैर्यं दानं वाक्पटुत्वं महत्त्वं
गंभीरत्वं चेशभक्तिं प्रियोक्तिम्
उत्साहित्वं चापि बन्धुप्रियत्वं
चैतान् यत्नात् सद्गुणानाश्रयेथाः

38 सूपापूपैस्स्वादुना पायसेन
प्राज्येनाज्येनापि दध्ना च भक्ष्यैः
संपन्नं चाप्योदनं याचनेन
प्राप्तं चेत्, तद्विद्धि तुल्यं विषेण

39 याच्ञाजन्यां दीनतामन्तरेण
स्वायासोत्थैः कर्ममात्रैरवाप्ता
षड्भिर्हीना स्वादभेदैर्यवागू-
रप्यत्यन्तं प्रीतिदा मानभाजाम्

40 कोपं चिन्तां वा जुगुप्सामविन्दन्
प्रीतस्वान्तः फुल्लवक्त्रारविन्दः
मध्येमध्ये तीर्थपानं न कुर्वन्
आसीनस्सन् भुङ्क्ष्व भोज्यं विशुद्धम्

41 मादाः पुत्रीं वंशहीनाय पुंसे
दुर्वृत्तायानन्तरोगार्दिताय
निर्वीर्यायादक्षिणायालसाय
न्यूनाङ्गायावार्यदारिद्र्यभाजे

42 सल्लापोऽन्यैः पूरुषैर्गेहकृत्य-
त्यागो गेहाद्वर्त्तनं बाह्यवेद्याम्
पत्युश्चाज्ञालङ्घनं ग्राम्यवार्ता
वर्ज्यानि द्राक् स्त्रीभिरेतानि पञ्च

43 विश्वासस्य द्रोहतो मानहानेः
उत्कोचस्यादानतो वा सभायाम्
दुर्वादाद्वा स्तेयतोवाऽनृताद्वा
नस्यात्ते भीः, नो त्रिभीया ऋणाच्चेत्

44 भूमौ लग्नो मारुतो वात्यशुद्धः
तस्यादानान्नासयोच्छ्वासकाले
त्वद्देहस्थं रक्तमायात्यशुद्धिं
तस्माद्रोगः स्यादतश्शेष्व मञ्चे

45 ताते मातर्यात्मजे सोदरे वा
सख्यौ भृत्ये बन्धुवर्गे श्रिते वा
दारिद्र्येणातीव सीदत्सु वित्त-
त्यागोऽन्येभ्यस्ते फलं नो सुवीत

46 स्वप्नप्रायायेन्द्रजालोपमाया-
नित्यायान्ते नीरसायाहिताय

सौख्याय स्त्रीभोगजाय स्पृहावान्
नान्यस्त्रीभिस्सङ्गमात्पातकी स्याः

47 अत्युष्णंवाऽत्यन्तशीतं विगन्धि
प्राचीनं वा हस्तनिर्लोडितं वा
स्पृष्टं नीचैः खादितं श्वादिभिर्वा
माभुञ्जीथा वस्तु भोज्यं कदापि

48 मादा वित्तं कूटसाक्षित्वभाजे
नैष्किञ्चन्यस्याभिनेत्रे विटाय
मित्रद्रोग्ध्रे चाकृतज्ञाय पुंसे
नित्याचारत्यागिने दांभिकाय

49 श्रेष्ठास्ते स्युर्येविदुश्शास्त्रतत्त्वं
तेभ्यःश्रेष्ठा ये तथैवाचरन्ति
तेभ्योऽपि स्युर्ब्रह्मनिष्ठा वरिष्ठा
श्शत्रौ मित्रे चाप्यभिन्ना महान्तः

50 दौर्गुण्यस्यारोपणं शात्रवेऽपि
स्वप्नेप्यन्यस्त्रीरतेस्सङ्कथां च
स्निग्धैर्नर्मोक्तिष्वपि ग्राम्यवाचं
साध्व्याः पत्न्याः क्लेशनं चापि जह्याः

51 ईशाधीनश्चाल्पविज्ञानवांस्त्वं
कर्तुं शक्तो नात्मनीनं[1] विबुध्य
तस्मादीशं सम्प्रपद्यस्व भक्त्या
संरक्षेत् त्वां सोऽनुकम्पापयोधिः

॥ नीतिपञ्चाशत् सम्पूर्णा ॥

---

१. आत्मनीनं = आत्मनेहितं ॥

॥ श्रीरस्तु ॥

॥ शिवाभ्यां नमः ॥

अथ

# ॥ नीतिमार्गप्रदीपिका ॥

1 नन्वास्माकाः! सलिलविलसद्बुद्बुदाभं युवत्वं
पूर्णोऽपि श्रीर्जलपरिसरल्लोलकल्लोलतुल्या
देहश्चांभोलिपिरिव भृशं नश्वरस्तत्कुतो वा
भक्त्यास्माभिस्सपदि न हृदोपास्यते चित्सभेशः

2 धर्मं चार्थं वितरति तथा काममोक्षौ च विद्या
कीर्तिं शुद्धां द्रढयति पुरस्सर्वलोकप्रकाशाम्
भाग्ये चाधो सति तु दिशति प्रौढहस्तावलम्बं
तस्माद्युक्ता गतिरिह नृणां नास्ति विद्यातिरिक्ता

3 आदौ कष्टाप्यथ सुखततिं दोग्धि विद्या समग्रा
मौढ्यं हत्वा विकचयति च ज्ञानमत्यन्तशुद्धम्
आदौ दत्ते सुखमतिमितं कामभोगस्तु नृणां
पश्चात्तस्मादपि शतगुणं दुःखमेव प्रसूते

---

१. न हृदोपास्यत इत्यत्र = न विद्वांसं चेष्टाऽयाति सुतक्‌लत्रादिरचितेत्यादिवत् स्वरसन्ध्याप्तसौन्दर्यो यतिविशेषः। अतोऽत्र न यतिभङ्गशङ्का कार्या, एवमग्रेऽपि तत्रतत्रोह्यम् ॥

4 विद्यारूपा सकलविदुषामस्ति भार्या सुशीला
पद्यग्रन्थः परमरुचिरश्चास्ति तस्यास्तनूजः
गद्यस्तोमात्मकमुदयते भाण्डजातं[1] च तेषां
श्लाघ्या भूषा सदसि विभयत्वं तु कस्यापि[2] सूरेः

5 गुर्वी विद्याऽप्यवसरपरिज्ञानहीना न विद्या
को वाऽर्थः स्यादसति तु पुनर्विद्ययाऽप्युक्तिदाक्ष्ये
वाग्मित्वं चेद्भवति विदुषां सूरिसम्मोदहेतुः
सौरभ्यं तत् कनककुसुमस्येव सर्वाभिनन्द्यम्

6 या विद्या स्यात् सदसि भयतः कम्पिनां पण्डितानां
वाचालत्वं यदपि बहुधा निर्भियां बालिशानाम्
वित्ते ज्ञात्वाऽप्यघमचरतां[3] त्यागभोगौ च योऽर्थः
निस्स्वानां या महततिरनुत्पत्तिरेषां[4] वरं हि

7 धाता वक्त्रांबुरुहविलसद्भारतीहंसिकोऽपि
प्राग्भिश्शस्तैस्सह सुकविभिर्नोपमीयेत जातु
नश्यन्त्येते न हि कविकृताः कीर्तिमन्तः प्रबन्धाः
नश्यन्त्येव द्रुहिणरचिताः सर्व एते पदार्थाः

---

१. भाण्डजातं = गृहोपस्करनिवहः ॥
२. कस्यापीति = सभानिर्भयत्वरूपं भूषणं कस्यचिदेव विदुषोऽस्ति, न तु सकलविदुषामपीत्यर्थः ॥
३. अघं = प्रतिग्रहादिप्रयुक्तं पापम् ॥
४. महततिः = द्रव्यव्ययैकसाध्या उत्सवपरंपरा ॥

8 विद्याऽभ्यस्ता बहुदिनगणैर्नस्फुरन्ती सभायां
लज्जाहेतुर्भृशमपजयात् स्वाश्रयस्यैव या स्यात्
सा मध्याह्ने स्वधुरि परसंसर्गवत्स्वाङ्गनातोऽ-
प्यत्यन्तार्तिं दिशति, सहसा यन्न शक्या विहातुम्.

9 कृच्छ्राभ्यस्तां प्रथममदृढीकृत्य विद्यां स्वमत्या
बह्वायासैः पुनरपि महानन्यविद्याप्रयत्नः
हस्तप्राप्तं बहु बहिरिवाकीर्य वित्तं प्रमोहात्
उच्छैर्भूयः प्रचुरधनसंपादनायत्नतुल्यः

10 पत्नी गुण्या सुचरितवती गेहधर्मार्हवृत्तिः
न स्याच्चेत्, तत्पतिपरिगृहीतो न भात्येव धर्मः
नो चेत् सम्पत्सकलमनुजावर्जने हेतुभूता
विद्याऽनन्ताऽप्यहह विदुषां नैव शोभेत किञ्चित्'

11 नम्रोऽत्यर्थं मधुरवचनोऽप्यर्थहीनो जनश्चेत्
लोकोऽयं तं प्रति कटु वचो भाषते, नैव सौम्यम्
सम्पन्नश्चेत् कठिनवचनोऽप्युद्धतोऽपि स्वभावात्
तत्पादौ संश्रयति, विगुणो ह्येष लोको न गुण्यः

---

१. न शक्येति = अङ्गना सहसा त्यक्तुं शक्या, विद्या तु न तथा। अतस्तादृशाङ्गनातोऽपि सा विद्याऽत्यन्तार्तिदेत्यर्थः॥

२. गुण्या = प्रशस्तगुणवती ॥

३. आवर्जनं = वशीकरणम् ॥

12 सर्वो बुध्वाऽपि च धनवतां लुब्धतामात्मदैन्यं
तेभ्यः प्रोच्यार्दयति[1], तनुते हीनकर्मापि तेषाम्
पूर्वात् पुण्यादधिगतधनं भाग्यहीनोऽनुजीव-
त्येषा लोकप्रकृतिरिति तन्मन्महे[2] नाज्ञतेति

13 विद्यैवालङ्करणनिचयो वेदितॄणां मनोज्ञः
नैवापेक्ष्यस्तदितर[3] इह द्राग्विनाशी जडश्च
न प्रार्थ्यन्ते[4] मणिगणचितैर्भूषणैर्भूषणानि
स्वालङ्कृत्यै, क इव[5] तनुयाच्चारुतां चारुतायाः

14 सर्वज्ञः को भवति जगति श्रीबृहत्कर्णभूषे!
तस्माद्विज्ञो वयमतितरामित्यहन्तां न कुर्यात्
टङ्केनोर्वीभृदपि[6] तनुना भिद्यतेऽहो महीयान्
भेद्यो नासावपि बृहदयस्कारकूटव्रजेन

---

१. अर्दयति = याचते ॥
२. तत् = धनहीनानां धनिकानुजीवनं ॥
३. तदितर इति अलङ्करणनिचय इत्यनुपज्यते ॥
४. न प्रार्थ्यन्त इति यथा भूषणैः स्वालङ्काराय भूषणान्तराणि नापेक्ष्यन्ते, यथावा सौन्दर्येण स्वस्य किमपि सौन्दर्यं नापेक्ष्यते, तथा विद्यावाद्भिरपि नालङ्कारोऽपेक्ष्यत इत्यर्थः ॥
५. इवशब्दो वाक्यालङ्कारे ॥
६. महाप्राज्ञैरप्यजय्यो विद्वान् कदाचित् किञ्चिज्ज्ञेनापि जय्यो भवेदित्येतत् अप्रस्तुतप्रशंसया प्रतिपादयति टङ्केनेति ॥

15 दृष्ट्वा स्वस्मादपि मितधनान् हन्त संपन्मदीया
भूयिष्ठेति प्रमदममितं प्राप्नुयाच्छेमुषीमान्
स्वस्माद्विद्याधिकमभिसमालोक्य सर्वा ममैषा
विद्याऽप्येतद्धुरि तु कियतीत्यन्तरङ्गे व्यथेत

16 विद्यावित्तद्वयविरहिता आत्मदैन्यं ब्रुवाणाः
कांक्षन्तश्च स्वधुरि[1] विनयोद्रेकभाजो यथा स्युः
एवं विद्याद्रविणसहिताश्चेद्विनीताः प्रकृत्या
तेषां विद्यां धनमपि बुधास्संपदित्यामनन्ति

17 मर्यादाऽतिक्रमणमभिसंवीक्ष्य नीचैः प्रणीतं
विद्यावन्तस्सम्पदि सुतरामेव नम्रीभवन्ति
वस्तूद्गच्छत्यतिलघुतमं चेत् तुलाया धटास्थं[2]
नम्रीभावं प्रभजातितमां द्राग्गरिष्ठं स्वयं हि

18 प्राज्ञैष्माहो विषयविमतान्[3] साधुवृत्ते वसाम-
श्चेति स्वान्ते[4] यदि निजमहत्तां[5] स्वयं मानयेयुः
तेषां हेयान्यपि विजहतां कुर्वतां वा विधेया-
न्यत्यासक्त्या सुकृतमखिलं निष्फलं[6] पर्यवस्येत्

१. स्वधुरि = विद्याद्रविणसहितानां स्वेषां पुरतः ॥
२. धटा = तुलाया अधोलंबिपात्रम् ॥
३. विषयान् शब्दादीनेव विमतान् शत्रून्॥ ४. स्वान्ते चित्ते
५. महत्तामित्यत्र नामाभेदयातिः एवमुत्तरत्रापि ॥
६. निष्फलमिति स्वोत्कर्षैकमानिनः सुकृतफलमेव न सिध्यतीत्यर्थः ॥

19 स्वस्याशेषैरपि बहुमतिं वाञ्छतः स्वप्रशंसा
दीपोद्योतीकृतिरिव जलैर्दीपपात्रोपनीतैः
मान्यंमन्यत्वविरह इत्याख्यायते मान्यतेति
प्रेक्षावद्भिः, सुखमिति सुखप्रार्थनाभाव एव

20 अन्यैः स्वस्याधिकबहुमतिं लिप्समानस्य सम्यक्
स्वानुष्ठेयं किमपि च सदास्त्येव हित्वा प्रमादम्
यत्त्वन्येषां गुणगणसमुद्घोषणं यच्च तेषां
दोषाणामप्रकटनमथो भाषणं यद्विनीतम्

21 धर्मान् ज्ञात्वा स्वयमचरतस्सूपदेष्टुः परेभ्यः
शुद्धिः काचिद्विफलवचसामस्त्यवश्यं विधेया
व्याहर्ता त्वं न भवसि कुतो धर्मवर्तीति कश्चित्
लज्जां यच्छन् न वदति यथा, संविमर्शस्तथा यः

22 शास्त्रीयार्थान् श्रमपरिचितान् स्वेतरेषां फलार्थं
विक्रीणानैः किमपि च फलं भोग्यमेवास्त्यवश्यम्
नानाभेदा अपि रचयितुर्यातना निर्दयस्या-
जस्रं मृत्योरतिबलवतो यत्किलाज्ञावशत्वम्

---

१. सुखमिति = सुखप्रार्थनाऽभाव एव सुखमिति प्रेक्षावद्भि-राख्यायित इत्यर्थः ॥

२. सूपदेष्टुः = सुष्ठूपदेशकर्तुः ॥

३. य इति तथा यस्संविमर्शः, स एव विफलवचसां विधेया शुद्धिरित्यर्थः ॥

23 विद्याहेतुप्रबलसुकृतैर्वञ्चितानामशुद्ध-
स्वव्याहारप्रकटनमतिप्रौढविद्वत्सभायाम्
चञ्चाकारादिव खगमृगा यूयमेते सदस्याः
मा भैष्टास्मत्पृथुतरतनोरित्यभीतिप्रदानम्

24 विद्याऽवद्यैर्ननु विरहिता लभ्यते शुद्धमेधै-
रेवाश्रान्तं न हसनपरैरत्र मूढाग्रणीभिः
लक्ष्मीदेव्या अपि पुरुषतारागहेतुप्रभस्य
स्त्रीरत्नस्याप्यनुभवसुखं नैव लभ्येत षण्डैः

25 विद्यां मूढश्रवणयुगळे संप्रवेश्याथ तेभ्योऽ-
वज्ञालाभो य इह विदुषां केवलं दोष एषः
धीमन्तस्ते गुरुतरमविज्ञाय मौढ्यं तदीयं
विद्योत्कर्षं निजमविदुषस्तान् कथं दूषयन्तु

26 प्राज्ञा भूभृत्सदनमसकृन्नादरेण श्रयन्ते
प्रायः पूजां दधति च, न तत्सेवनेनापि मूढाः
नो मार्जारो नरपतिमहान्तःपुरस्थोऽपि मान्यः
मान्यो हस्ती नृपगृहबहिर्द्वारबद्धोऽपि लोकैः

---

१. वञ्चितानां = रहितानाम् ॥

२. चञ्चा = सस्यक्षेत्रेषु खगमृगाणां भयोत्पादनार्थं निबद्धः तृणमयः पुरुषः ॥

३. प्रभस्येति = श्रियोऽपि पुम्भावकामनाजनकलावण्यातिशयस्येत्यर्थः ॥

27 पातिव्रत्यप्रवणमनसां योषितामात्मभर्ता
देवः साक्षादपिच पितरावेव देवौ सुतानाम्
देवो नृणां गुरुरिह मुहाधर्मनिष्ठापराणां
देवो राजा कनकमणिभिर्मण्डिताङ्गोऽखिलानाम्

28 दृष्ट्वैवाज्ञां ददति सकलं श्रोत्रतो वीक्षमाणे
राज्ये प्राप्तेऽपि च सति पुराजन्मपुण्यैकलभ्ये
प्रेम्णा लोकान् स्वयमनवतां तेन किं पार्थिवानां
शस्त्रेण स्यात् किमु विजयदेनापि निष्पौरुषाणाम्

29 गृह्णानानां सकलमनुजान् पीडयित्वा करं[1] स्वं
राज्ञां क्षीरग्रहणमपि गोर्युक्तमूधो निकृत्य
संरक्ष्यैव प्रकृति[2]निकरं न्यायतो गृह्णतां स्वं
प्रायेणै[3]क्षिष्महि ननु वसून्योघ[4]संख्यातिगानि

30 अद्य ग्राह्यं द्रविणमसहो यः परेद्युर्ग्रहीतुं
स्थित्वाऽध्यक्षे[5] गदितुमनसां दीनतामप्यदृश्यः

१. करं – राजग्राह्यं द्रव्यम् ॥
२. प्रकृतयो = जनाः ॥
३. ऐक्षिष्महीत्यत्रशोभांपुष्यत्याधिकामितिवत् धात्वभेदयतिः ।
४. ओघ इति = काचन सङ्ख्या ॥
५. अध्यक्षे = प्रत्यक्षे ॥

गत्वाप्यग्रे स्वमभिलषितं जल्पतां दन्तघर्षैः
त्रासं तन्वन् नरपतिरहो नाध्वचोरो न भूपः

31 धार्या माला दधदपि तनूमङ्गरागैर्विलिंपन्
बिभ्रद्वस्त्राण्यपि सुरुचिराण्याहरन् भोज्यपिण्डम्
गाढं प्रोक्तं हितमपि बलात्प्राप्य शश्वन्न शृण्वन्
नेत्रोन्मेषानपि नरचयन् राट् श्वसन् प्रेत एव

32 चारैस्तथ्यं न हि खलु परिज्ञायतेऽहं रहस्थो
जानीयेति स्वकभुजमखोऽभ्येत्य बुध्वाऽपि दोषम्
नृणां दोषाः सुदुरधिगमा इत्यलं यद्विभीयात्
निश्चेतुं राट्, स हि नृपनयो, नाश्रुतिर्दीनवाचाम्

33 किंकिं ब्रूयुर्न हि सिततमं वायसं निर्णयन्तः
मातुर्हत्यामपि समुचितां स्युर्वदन्तोऽपि केचित्
तस्मात्तत्तद्भवति च जने भ्रान्तिवर्जं यथार्थं
यद्गृह्णीते नरपतिरिदं ह्यस्य बोधाधिकत्वम्

---

१. नाध्वचोर इति = अध्ववर्तित्वाभावादिति भावः
२. नभूप इति = जनरञ्जनाभावादिति भावः ॥
३. राट् = राजा ॥
४. दीनानां नाहमपराधी विचार्य मां दण्डयेत्यादि क्रन्दतां जनानाम् ॥
५. तत्तत् = परेषु दोषारोपकं वाक्यजालम् ॥

34 दावेऽप्युग्रे ज्वलति समहोच्छ्वासमेवाचलन्तः
स्थानान्नैजादजगरचयाः सुस्वपन्त्यप्रबुद्धाः
एवं कष्टेष्वपि निजदृशोर्गोचरेष्वाधिदेषु
द्राक् बुध्यन्ते किमु जडधियो, नैव जानन्ति हन्त

35 मित्रद्वेषो रिपुसमुदये प्रेम चारेष्ववज्ञा
सन्देहित्वं परिसरगतेष्वात्मनश्चाखिलेषु
न्यक्कारश्चोत्तमजनगिरां व्यत्ययो[1] वा गुणानां
चिह्नान्येतान्यचिरजनुषामापदां भूपतीनाम्

36 स्वेनार्च्येषु स्वभवनबहिर्द्वारमासेदिवत्सु
प्रत्युत्थानाद्यलसमनसां श्रीमदोत्थाविनीत्या
लक्ष्मीभोगे निजकरगते चापि राज्ञामदूरा
लक्ष्मीज्येष्ठाघनतमकुचद्वन्द्वभोगोपलब्धिः

37 सौम्यालोकप्रचुरकलिकाः स्मेरवक्त्रप्रसूनाः
सत्यश्लक्ष्ण[2]स्ववचनशलाट्टत्तमैश्शोभमानाः
शश्वद्दानात्मकफलगणाः श्रेय उत्पादिनो ये
दातारः स्युस्तइह धरणौ भूरिदाः कल्पवृक्षाः

38 ग्रासाद्भ्रष्टेष्वतिमितकणेष्वात्मना ग्रस्यमानात्
हस्त्यामीलन् प्रकृतितरलो[3] नैव खिद्येत जातु

---

१. व्यत्ययः = अन्यथाभावः ॥
२. श्लक्ष्णं = मृदुलम् ॥
३. तरलः = चञ्चलदेहः ॥

तत्रत्यास्तु स्वजननिवहैर्मातरः[1] कोटिशस्ता-
नादायैतान् कतिपयकणान् साधु जीवन्ति भुक्त्वा

39 अस्त्राढ्यस्य द्विरदजयिनः क्षात्रवृत्तेश्च राज्ञः
व्योम्नोऽप्यल्पीकृति[3]पटुमहास्वर्णराश्यर्पणाच्च
मृद्यादृष्ट्योल्लिखित[4]महितप्रेमभारात् प्रफुल्लात्
वक्त्रात्प्राप्तो वहति परमत्वं बहूकार[5] एव

40 एनं देहं पललकलितं नश्वरं निर्णयन्तः
कीर्तिं देहं परिकल्पयितुं श्रद्दधाना महान्तः
खेदे स्वल्पेऽपि च भवति मत्याश्रितानां जनानां
निश्चित्यान्यत् फलमपफलां स्वां तनुं न ह्यवन्ति[6]

41 हित्वा मानं स्वमथ महिनत्वं च तद्वेष लोकः
स्वस्य प्राणान् परममधुरान् रक्षतु प्रेमभारात्
पश्चात् स्वस्य क्षणमपि भवेच्चेद्विलम्बस्तु मृत्योः
स्वप्राणानामविरतकृतेनापि संरक्षणेन

---

१. स्वजननिवहैः=बन्धुगणैः ॥ २. मातरः=पिपीलिकाः॥
३. अल्पीकृतीति=व्योमापि यथाऽल्पं स्यात्तथा महान् स्वर्णराशिरित्यतिशयोक्तिः ॥
४. उल्लिखितं=प्रकाशितम् ॥
५. बहूकारः=श्लाघा ॥ तथा च पूर्वोक्तविशेषणैः प्रकटितमहत्त्वस्य राज्ञः प्रीतिप्रफुल्लेन मुखेन श्लाघैव स्वर्णराश्यर्पणादपि महतीत्यर्थः ॥ ६. नह्यवन्तीति=स्वशरीरत्यागेनापि स्वाश्रितान् खेदाद्रक्षन्तीत्यर्थः ॥

42 वध्वस्साध्व्यश्शुचिकुलभवा नष्टमाङ्गल्यसूत्राः
ज्ञातारश्चेन्द्रियविजयिनस्त्यक्तमिथ्याप्रपञ्चाः
हिंसाशीलास्समरसमदा युद्धवीराश्च मृत्योः
अत्यासन्नादपि न बिभियुर्घोरपुष्पावतंसात्

43 ईर्मैः[1] पक्वैः क्रिमिकुलचितैर्योजनाक्रामिभूयो-
दुर्गन्धे[2] च स्ववपुषि मृतिं प्रेक्ष्य मूढा व्यथन्ते
प्राज्ञाः पुण्यं निजतनुफलं प्राप्तवन्तः कृतार्थाः
नो खिद्यन्ते किल तनुमिमां भारभूतां विहातुम्

44 ओघाधीनप्लवनमुडुपं किं प्रतीपं प्रयायात्
एवं राज्ञो वशमनुगता भिन्नभिन्नप्रवृत्तेः
लोकाः कस्यापिच सति नृपे दूषके दूषयित्वा
तस्यैवास्मिन् पुनरपि तथा स्तावके तु स्तुवन्ति

45 गत्वा शश्वत् स्वयमिह हठाच्छ्रोत्रसंप्रोषणैर्वा
वाक्यैराज्ञः परमसचिवाः बुद्धिमुद्बोधयन्तः
तस्य क्रोधात् स्वयमतिभयाद्बोधनं न त्यजन्ति
यन्तारः किं मदकरिवशं प्राप्नुयुः प्राप्तशिक्षाः

46 नृणां क्ष्माभृत् सकृदभिमुखोऽप्यात्मविज्ञापनायै
प्रायेणायं न खलु सुगमोऽसौम्यदृक् स्यात् सकोपः

---

१. ईर्मैः = व्रणैः ॥
२. भूयोदुर्गन्धे = बहुतरदुर्गन्धे ॥

तस्मादस्मत्परिचित इति स्वान्यभीष्टानि धीमान्
अज्ञात्वैवावसरमुचितं नार्थयेतावनीपम्

47 प्रत्नां मैत्रीं स्मरति न च, नो मन्यते बान्धवत्वं
क्रोधे स्फीते मनसि कुरुते नैकमत्यं च भूपः
राज्यैश्वर्य[1]प्रणिहतहृदः स्नेहवत्ता किमास्ते
नैय्यत्येन प्रणयविषयः कोऽपि नास्तीह राज्ञः

48 राजद्वारे चिरविरचितेनापि[2] मत्सेवनेन[3]
प्राप्तं किं वा फलमिति कृती राजसेवां न निन्देत्
सेवा सर्वा चिरविरचिताप्यन्ततः स्वस्य सार्था
भूत्वा भूभृत्सदसि महतीं मान्यतां दोग्धि यस्मात्

49 भव्यान् यत्नान् प्रथममकृतार्थानपि प्राज्ञ आन्तं
कुर्यात्, यत्नाः कतिचनकृता अन्तनस्सत्फलाः स्युः[4]
आस्ये जन्तोरवगतभृशासन्नमृत्योरपि द्राक्
आयुर्वृध्यौषध[5]वितरणे दोषलेशोऽपि नास्ति

---

१. ऐश्वर्यं = नियन्तृत्वम् ॥

२. चिरविरचितेनापीत्यत्र "स्पर्शक्लिष्टामयामितनखेनासकृत्सारयन्ती" त्यादिवत् नामाभेदयतिः ॥

३. मत्सेवनेन = मत्कर्तृकेन सेवनेन ॥

४. सद्यत्नानां फलसिध्यभावेऽपि 'यत्ने कृते यदि न सिध्यति कोऽत्रदोष' इति न्यायेन कर्तुः न कोपि दोष इत्याह आस्य इति ॥

५. आयुर्वृध्यौषधेत्यत्र 'मेघालोके भवति सुखिनोऽप्यन्य-

50 निर्यत्नस्सन् स्वयमयतनेप्यन्यथा नो फलन्ति
प्राक्कर्माणि स्वफलमिति नो बुद्धिमान् व्याहरेत
कर्मास्तित्वं मनसि कलयामीति को वा विमोहात्
मर्त्यो भूयोमरुदभिमुखं दीपमारोपयेत

51 स्थेयान् यत्नो विधिबलजये शौर्यवानेव, सत्यं
मार्कण्डेयः प्रविमलतपा अत्र दृष्टान्तभूतः
विध्यङ्कूरं स्वयतनबलान्नाशयित्वा जिघांसोः
मृत्योः प्राणानहरत धिया यस्त्रिलोकप्रसिद्धम्

52 देशं बुध्वा समयमपि संशील्य हेतून् विचिन्त्य
ज्ञात्वा सम्यक् फलमपि सहायोर्जितत्वं विबुध्य
वृद्धैस्साकं तदनु च समालोच्यमालोच्य सम्यक्
पश्चाद्धीमान् प्रयतनबलैः साधयेन्मुख्यकार्यम्

53 देहश्रान्तिं न गणयति, नोमन्यते वा बुभुक्षां,
निद्रां नाप्नोति च, न मनुते चान्तरायं परोत्थम्
यातः कालस्य च पुनरनावर्तनं नावधत्ते,
नो जानीते परिभवमपि स्वीयकार्यैकदृष्टिः

थाष्टीत्तिं चेत ' इतिवत् प्रातिपदिकभेदेऽपि स्वरसन्ध्या-
प्तसौन्दर्या यतिः ॥

१. भूयोमरुत् = बहुतरवायुः ॥

२. यातः = गच्छतः ॥

54 पूर्णे निम्ने सरसि महतीं भासमानां गजस्य
छायां तत्र प्लवनचपलो नाशयेद्दर्दुरोऽपि
तस्माच्छत्रौ बलविरहिते चाप्युपेक्षां दधानाः
पश्चात्तस्मादुपगतमहाक्लेशमासादयेयुः

55 लोकान् सर्वानपि वशयितुं पेशला एकयोक्त्या-
प्यन्तश्शत्रुं त्वसकृद्दृषयः काममेवातिजिग्युः
एवं भूपा रिपुगणमुपेक्ष्यापि बाह्यं प्रभूतं
शश्वद्भीता अहिभयमभिद्रावयन्ति प्रयत्नात

56 अन्तर्गूढं विषमिव बहिस्स्नेहभाजां रिपूणां
वैरं क्ष्मापस्सपदि विशदीकृत्य तान् सन्त्यजेद्द्राक्
नो दाक्षिण्यं रिपुषु बिभृयात्, न व्रणं छादयेत,
छित्वा शस्त्र्यापि तु समुचितैर्भेषजैर्नाशयेत

---

१. दर्दुरोऽपीति अत्यल्पोऽपि मण्डूकः अतिमहतीमपि सरस्स्थितां हस्तिछायां जलचालनेन नाशयति अतोऽल्पोऽपि शत्रुर्नोपेक्ष्य इत्यर्थः ॥

२. लोकानित्यादि = एकेनैव वचनेन सर्वानपि लोकान् वशीकर्तुं समर्था ऋषयोऽपि अन्तश्शत्रुं काममेव पुनःपुनस्सप्रयत्नं अत्यन्तं जितवन्तः अत । अन्तश्शत्रु-जय एवावश्यको दुष्करश्चेत्यर्थः ॥

३. अहिभयं = स्वपक्षप्रभवं भयम् ॥

४. अभिद्रावयन्ति = निवर्तयन्ति ॥

५. शस्त्र्या = सूक्ष्मेण शस्त्रेण ॥

57 स्निग्धे कुर्वन्नमितकुहनां मन्यमानोऽतदर्हान्
द्रोहान् दुर्हृच्चरितरसिको यस्तु वर्तेत मर्त्यः
तस्यायुः किं सुदृढमपि न प्राप्नुयादन्तमारात्
मृत्युस्तूष्णीं भवति समवर्त्याह्वयं किं विलोप्य

58 क्रोधः कस्मिन्नपि भवति चेदात्मनस्तत्कृतानि
प्रायः कर्माण्यतिहितकराण्यप्यपथ्यानि भान्ति
चित्तं कस्मिन्नपि भवति चेत् सुप्रसन्नं तु नैजं
चेष्टास्तस्याविरतमहिता एव पथ्या विभान्ति

59 श्रोत्रप्लोषण्यपि च सुहृदामात्मसौख्याय वाणी
दुःखायैव श्रवणमधुराप्यात्मनो दुर्हृदां सा
अत्युष्णोऽपि ज्वलदनलवत् टङ्कणो[1] रोगहारी
क्ष्वेळो रोमोद्गमदशिशिरत्वोऽपि[2] हन्त्येव जन्तून्

60 वाचा[3] क्रूरानृतपिशुनसम्बन्धहीनोक्तिहानं[4]
शश्वद्देहेन्द्रियनियमनं कृत्यतो धर्महीनात्
कामक्रोधप्रभृतिकमनः कल्मषोन्मूलनं चे-
त्येतत् प्राज्ञास्त्रितयमपि सच्छीलमित्यामनन्ति

---

१. टङ्कणः = क्षाराख्य औषधविशेषः द्राविडभाषायां वेङ्कारमित्याख्यायते ॥

२. रोमोद्गमदशिशिरत्वोऽपि = रोमाञ्चप्रदशीतलत्वोऽपि ॥

३. वाचा = वागिन्द्रियेण ॥

४. क्रूरेत्यादि = परुषायाः असत्यायाः पिशुनायाः असम्बद्धायाश्च उक्तेः वर्जनमित्यर्थः ॥

61 प्राज्ञाश्शश्वच्छ्रुतिभिरुदिते शीलमार्गे वसन्तः
नो सज्जन्ते निरवधिमहादुर्दशा अप्यघेषु
व्याघ्रोत्तंसा अपि च जठरोद्दाहकातिक्षुधार्ताः
सस्यग्रासान् न कबळयितुं कामयन्ते कदापि

62 वस्तुप्राप्तिः स्वकुलकृतवाग्विक्रयादेव या स्यात्
सम्यक् पुष्टिस्समुचिततपोविक्रयाद्या च तन्वाः
या भाण्डानां निजगृहसदां विक्रयादेव भुक्तिः
तासां त्यागः सुकुलजनुषां सर्वधर्मप्रधानम्

63 रन्ध्रं ज्ञात्वा बहुकुहनया भीषयित्वा जनेभ्यो
दीनेभ्यः स्वं समपहरतां गर्वितानां च सम्पत्
आदौ मुग्धास्तनकलशवद्वृद्धिभागप्यवश्यं
पश्चात् क्षीयेत हि झटिति तन्मध्यवत् सर्वथापि

64 लब्धं स्वल्पं बहुतममनासादितं मन्यमानाः
तृप्त्या हीना व्यपगतसुखास्सम्प्रणश्यन्ति मूढाः
क्षिप्तं क्षिप्तं सकलमपि संव्याप्य जग्ध्वाप्यतृप्तः
काष्ठव्रातं सुदृढमनलोऽप्यन्ततः किं न नश्येत्

65 नातिक्रम्य स्थितिमपि निजां वंशवृत्तां च नीत्या
कुर्वन् कर्माण्यकृतवृजिनो दुर्दशायां च सत्याम्
ईहाशून्यः परधनहृतौ यस्तु वर्तेत मर्त्यः
तस्यागारेऽनिशमपि रमा सन्निधानं विदध्यात्

69 वाग्मित्वं स्वं स्वयमसफलीकृत्य तस्य प्रहाणं
सम्पद्धेतोस्सुकृतनिचयस्योज्झनान्नान्यदेव[1]
सम्पद्यद्यप्यतिशयचलाऽथापि वाग्मित्वलभ्यं
पुण्यं कीर्तिं फलमभिलषन् नो बुधस्सन्त्यजेत्तत्[2]

70 शीलासक्तास्सुकरमपि वा पातकं नाचरन्तः
प्राज्ञोत्तंसा भृशमजहतो दुष्करं चापि पुण्यम्
यत्नात् स्वल्पादपि लघु समासादनीये महार्थे
त्यक्त्वात्यन्तं त्वरिततरतां किं विलम्बं विदध्युः

71 स्वेनासाध्यं[3] यदिह, तदहं साधयामीति मिथ्यै-
वाङ्गीकर्तुः परहृदनुवृत्यास्ति नृणां फलं किम्
तद्दाक्षिण्यं परुषवचनैः प्राणिनो हृद्व्यथा स्या-
दित्युच्छेत्तुश्शिर इह कृपातोऽपि न न्यूनमेव

---

१. उज्झनं = त्यजनम् ॥

२. तत् = वाग्मित्वम् ॥

३. स्वेनेत्यादि = केनचिदर्थिना स्वाभीष्टे प्रार्थिते स्वेन तदसाध्यमिति ज्ञात्वापि अवश्यमहं तत् साधयामीति दाक्षिण्यवशेन मिथ्याप्रतिज्ञाकर्तुः पुंसः तत्दाक्षिण्यं निष्फलम् ॥ किञ्च परुषवचनमात्राहापराधकारिणि विषये परुषवचनं प्रयुक्ते सति तस्य मनोऽव्यथा स्यात् इत्यालोच्य कृपावशेन तस्य शिरच्छेदकर्तुः प्रभोः या कृपा तत्सदृशं तद्दाक्षिण्यमित्यर्थः ॥

72 अल्पाः स्वल्पं किमपि विफलं कर्म कृत्वापि शश्वत्
सम्भ्रम्योच्चैः सकलविदितत्वार्थमुद्घोषयन्ति
कृत्वाप्यन्याचरितमिव[1] सत्कर्म सार्थं च तूष्णीं
तिष्ठन्त्यज्ञा इव जगति ये, दुर्लभास्ते महान्तः

73 वैराभावे[2]ऽप्यखिलमनुजावद्यवादान् प्रहासा-
नप्युत्पत्तेः[3] फलमिति सदैवाचरन् दुष्टबुद्धिः
नोद्दिश्यान्यत्[4] स्वफलमितरस्यातिभीतिप्रकम्पं
द्रष्टुं तालूद्दळन[5]कृदिवात्यन्तभीतिप्रदः स्यात्

74 दुष्कृत्याय प्रयतनपरेष्वास्तिकेष्वीश्वरस्तान्
प्रादुर्भूयाकरुणमसकृद्दण्डयेन्नैवमन्यान्
भूयोभूयः परमदयितेष्वात्मजेष्वेव हार्दात्
वाचः पथ्याः परमफलदास्तातपादा ब्रुवन्ति

---

१. अन्याचरितमिव = अन्यकर्तृकमिव स्वकर्तृत्वमप्रकाश्येत्यर्थः ॥
२. वैराभावेऽपि = स्वदूष्याणां जनानां स्वस्य च विरोधाभावेऽपि ॥
३. उत्पत्तेः = स्वजन्मनः प्रयोजनमिति मत्वा ॥
४. नोद्दिश्येति = अन्यत् वैरनिर्यातनादिकमनपेक्ष्यैव कस्यचित् तालुदळने कृते सति तस्य तदा जायमानां भीतिं प्रकम्पञ्च द्रष्टुमेव तालुदळनकृत् पुरुष इव निष्कारणदूषको भयं सर्वेषां जनयतीत्यर्थः ॥
५. उद्दळनं = पीडनम् ॥

75 दुष्कृत्यानि प्रविरचयतां संपदादौ प्रवृद्धा
सौख्यापादिन्यपि न कुशला, वस्तु दुष्टं न साधु
तस्मादेषा मृदुरसनयाऽऽलिह्य चानन्द्य हन्त्रा
शृङ्गाग्रेण प्रबलगवयेनैव साम्यं विधत्ते

76 दैवौर्जित्यं[1] हृदि निदधतो जिह्रतो लोकवादात्
सन्तो दुःखैर्[2]व्यथितमनसः किञ्चिदंहःकृतोऽपि
प्राज्ञैर्भूयः किणित[3]रसनं स्तोत्रपात्रीकृतेभ्यो
नैव न्यूनास्सुचरितपथान्नच्युतेभ्यो महद्भ्यः

77 धर्मो नैवेतरजनगृहिण्यालयद्वारसेवा
धर्मो[4] वा स्यात् सुखलवकरी चेत्तदा सेव्यतां सा
नैवंभूतापितु पुनरसौ देहकंपस्य चित्तो-ऽ
त्कंपस्यापि प्रबलकरणं भीतिदः कोपि रोगः

78 स्वीयाचारं परममविनाश्यात्मविद्यामहत्वा
धर्मान् कृच्छ्रैश्चिरमुपचितानाशु चाभ्रंशयित्वा
तारुण्याद्यं हितमतितरामप्रलोप्य स्वपत्न्या
भोगः श्रेयान् कुसुमितलतासुन्दराङ्ग्या युवत्या

---

१. दैवस्य=भवितव्यतायाः । और्जित्यं=बलवत्त्वम् ॥
२. दुःखैः=दारिद्र्यप्रयुक्तैः ॥
३. किणितेत्यादि=रसनापि यथा सञ्जातकिणा स्यात् तथा पुनःपुनः स्तुतेभ्य इत्यर्थः ॥
४. धर्मो वा स्यादिति वात्स्यायनमताभिप्रायेणेदम् ॥

79 कामाक्रान्ता न खलु दधते साध्वसं प्राणिघातात्
नो लज्जन्तेऽप्यनृतवचनान्नैव रक्षन्ति मानम्
कुर्युस्तेयं[1] न परमखिलान्यप्यकृत्यानि कुर्युः
कामं कुत्साकलुषविततेः कारणं यन्न विद्युः

80 उद्गीर्यास्यस्थमपि मधुरं[2] वस्तु तिक्तं[3] बुभुक्षोः
कुत्स्यस्योष्ट्रादिकमृगकुलस्योपमां प्राप्नुवन्तः
केचिल्लक्ष्म्या अपि शुभगुणैरुत्तमायां स्वपत्न्यां
सत्यां चान्यास्वभिकमनसः स्वोन्नतिं नाशयन्ति

81 पातिव्रत्यांबरवरधरा प्रेमपुष्पावतंसा
ह्रीपाटीराञ्चिततनुलता शीलसौगुण्यभूषा
पत्नी स्याच्चेत्, यदि च विभवः पुत्रनामाऽपि तस्याः
अस्या भर्तुः किमिव हि तपः स्वेन कर्तव्यमास्ते

82 सौन्दर्यश्रीसुरुचिरतनुर्नूत्नतारुण्ययोगः
सम्यग्गायी सकलवनितानेत्रहारिस्वदृष्टिः
भर्ताऽत्यन्तं मधुरमृदुळोक्त्याश्रयोऽप्यस्तु कामं
स्त्रीणां चित्तं लगति पुरुषे भर्तृभिन्ने तथापि

---

१. कुर्युरिति = स्तेयं परं न कुर्युः किन्तु सकलान्यप्यकृत्यानि कुर्युरित्यर्थः ॥

२. मधुरं वस्तु = आम्रपल्लवादि ॥

३. तिक्तं = निम्बपत्रादि ॥

83 नानानृभ्यो निजरतिमुदां विक्रयादेव भुक्तिं
सन्तन्वाना कनकवलयालङ्कृता वारयोषा
भर्तुस्[1]स्वस्य स्वजननिवहस्यापि जारस्य[2] वा नो
हानिं दत्ते तत इयमतीवोत्तमा धर्षिणीभ्यः[3]

84 नैव ध्यायत्युपपतिरता तस्य बान्धव्यभङ्गीं
विन्ते वंशोन्नतिमपि न वा नावति स्वां ह्रियं च
नो जानीते स्वहृदयजयं श्रेय आस्ते किमन्यत्
निष्प्रज्ञाया इह हि जननं पातकायैव तस्याः

85 धृतावद्या विषयजयिनो नोत्तमा मानयन्ति
स्त्रीत्वं, नामाप्यभिदधति नो योषितां, रागगीतीः
नो शृण्वन्ति, स्वहृदयगतं स्याद्यथैवं न पश्य-
न्त्यासां रूपं, न हि च नटनाद्याद्रियन्ते कदापि

86 निर्मोहत्वात् सुखलवतृषा[4]ऽनाहतार्यव्रतस्थाः
निर्दोषस्त्रीमृदुभुजलतालिङ्गसंवेशमुख्यैः
यद्वा सौख्यं, यदपरमतः, तत्र वाञ्छाऽतिभुक्ते-
रेवान्नादेरिति, मितमिहोन्मत्तवद्भुञ्जतेऽन्नम्

---

१. भर्तुः = भर्तृस्थानीयस्य प्रीतिनायकस्य ॥
२. जारस्य = द्रव्यनायकस्य ॥
३. धर्षिणीभ्यः = सत्कुलप्रसूताभ्यो व्यभिचारिणीभ्यः॥
४. सुखलवेति = वैषयिकाल्पसुखाशया अपरिक्षितशीलाः उत्तमपुरुषाः ॥

87 देहेऽन्येषामधिककरुणास्नेहवन्तोऽपि सन्तः
न त्रायन्ते सुकृशमपि वा विस्फुटास्थि स्वगात्रम्
मोक्षे ज्ञानछदिषि[1] भवने वासमेवेहमानाः
देहं गेहं पललपटलं नश्वरं किन्ववन्ति

88 अत्यल्पाल्पं विषयसुखमप्याश्रितास्सर्वमन्यत्
सौख्यं श्रेयस्तममपि जहत्येव मत्वा तृणाय
ब्रह्मानन्दाम्बुधिजलझरे नित्यसंक्लृप्तलीलाः
भौमानन्दे नरकसदृशे तुच्छके किं पतेयुः

89 सन्यासस्थास्तदितर[2]दुराचारवन्तोऽपि योषित्-
सङ्गं जह्युर्यदि, तदरयोऽप्यञ्जलिं सन्निबध्य
तेषां काष्ठां[3] सपदि विनमन्त्येनमेते न जह्यु-
श्चेच्छ्रेयांसोऽप्यधिकमभिकैरप्यमी स्युर्जुगुप्स्याः

90 नानाकृत्यव्रजमसफलं सम्भ्रमेणैव कृत्वा
घस्रान्[4] रात्रीरपि ननु वृथा यापयन्तो विमूढाः
पुण्ये कृत्ये महति सुजनैः प्रेषिताश्चेत् प्रकामं
कम्पन्ते द्राक् चकितचकिताः, स्वस्ति यायुः[5] कथं

---

१. छदिः = पटलम् ॥
२. तदितर = योषित्सङ्गेतर ॥
३. काष्ठां = दिशम् ॥
४. घस्रान् = दिनानि ॥
५. यायुः = प्राप्नुयुः ॥

91 नाशाभावं परममवधिं स्वायुषो वा विबोद्धुं
शक्तिर्नृणां यदि, तदधुना यौवनं वर्तते नः
सोढ्वा कृच्छ्रं जरसि सुतपः प्राचरेमेत्यशङ्कं
निद्राप्यर्हा तप ऋषिगणास्तद्विदोऽप्याचरन् द्राक्

92 नक्तं स्तेनाः पथिककनकग्राहिणः पान्थवर्गं
हित्वा मार्गं विपुलमपथं यापयन्ते यथैवम्
पापानि प्राग्जननरचितानीर्ष्यया प्रेरयेयुः
पापं कर्तुं सुकृतकरणे सज्जमानांश्च जन्तून्

93 चित्ते रक्ता बहिरपि तपोवेषभाजो य एषां
वेषस्सोऽसौ न खलु कवचेनापि सादृश्यमेति
अक्षाण्यन्यान्यवितुमनलंभूष्णुरप्येष सम्यक्
रक्षेदेकां त्वचमपि, न सन्त्रायते तां च वेषः

94 भो भो मर्त्या! मतिविरहिता! व्याजतश्शीलनिष्ठाः!
सर्वेऽस्माभिः कपटचरितैर्वञ्चिता इत्यमन्दम्

---

१. नाशाभावं = नित्यत्वम् ॥ २. जरसि = जरायाम् ॥
३. निद्रेति = तपस्यनादर इति निर्गलितार्थः ॥
४. तद्विदः = स्वस्यानित्यत्वं स्वायुषः परमावधिं वा जानन्तः ॥
५. अक्षाणि = इन्द्रियाणि ॥
६. अनलंभूष्णुः = असमर्थः ॥
७. एषः = कवचः ॥

मा मोदध्वं सकलकपटान् सर्वसम्पूर्णरूपो
विद्यात्सर्वेश्वर इति भयाद्गोपनं ज्ञानचिह्नम्

95 दुर्गन्धाढ्ये भृशमपिहिते[1]ऽप्यामिषे पूतिगन्धो
दूरं गच्छत्यखिलमनुजघ्राणरन्ध्रार्तिकारी
एवं मङ्क्षु प्रसरति परद्रोहवाणी जनानां
सम्यग्गूढाप्यहह पटहोद्घोषितेवेश्वरेण

96 वस्तु स्वल्पं झटिति न पतेत् भ्रष्टमुच्चैःपदाच्चेत्
संशीर्णं स्यात् पतदपि न वा, नो तथा स्यान्महीयः
जीवन्त्यल्पाः स्वपदगळिताश्चापि रीत्या कया चित्
जीवन्त्यार्याः कथमपि पुनर्नैव तादृग्विधाश्चेत्[2]

97 निन्दां सूते न खलु महतां निन्द्य[3]मप्यत्र कर्म
द्रागेवैतां[4] जनयति तदेवा[5]ल्पकानां जनानाम्
गोमेधेनानलमभिसमच्योदधानैः प्रवृष्टिं
विप्रैस्तुल्याः किमु पलभुजो देहपुष्ट्यै कदर्याः

98 ईशस्सर्वेष्वपि समतयान्तर्बहिर्वर्तमानः
त्यक्तासङ्गो भवति च यथा योगिनस्तद्वदेव

---

१. अपिहिते = आच्छादिते ॥
२. तादृग्विधाश्चेत् = स्वपदगळिताश्चेत् ॥
३. निन्द्यमपीति = निन्द्यमपि पशुविशसनादिकं कर्म यागीयं सत् महतां निन्दां न ददातीत्यर्थः ॥
४. एतां = निन्दाम् ॥
५. तदेव = पशुविशसनादिनिन्द्यकर्मैव ॥

तेषान्तेषां भृशमनुगुणाश्चित्तपाकानुगुण्यात्
सञ्जल्पन्तो हितकरगिरः क्वाप्यसक्ता भवन्ति

99 सन्मार्गज्ञास्सदमलपरब्रह्मविज्ञानलाभै-
काग्रस्वान्ता अनृतविषयेष्विन्द्रियाण्यप्रवर्त्य
दान्तिद्वारस्थितिमति दुराचारलज्जाकवाटे
सन्तोषाख्यार्गळकलनया सन्नियच्छन्ति यत्नैः

100 विद्यापत्न्या समुपजनितो ग्रन्थरूपो हि पुत्रः
पुत्रश्शास्त्रप्रवचनपटोस्सूरिभर्तुः प्रियत्वात्
सर्वत्यागप्रविशदहृदां तत्वबोधात्प्रफुल्लो-
मोदो मोदस्तादितरसुखं नश्वरं दुःखमेव

101 ज्ञात्वा शास्त्रं विनयविमदः कर्म हित्वा निषिद्धं
कृत्वासम्यग्विहितमपि संशोध्य चित्तं विवेकात्
मुक्तिप्राप्त्यौपयिकपदवीं साधयित्वा यथार्थ-
ज्ञानं प्राप्तः कृतिषु विमुखो ब्रह्मनिष्ठः परिव्राट्

---

१. अनृतेषु = असत्येषु ॥ विषयेषु= शब्दादिषु ॥
२. सन्तोषः = दैवायत्तेन भोगेन तृप्तत्वम् ॥
३. ज्ञात्वा = अभ्यस्य ॥
४. विनयेन विमदः = विद्वत्तानिबन्धनगर्वरहितः
५. विवेकात् = नित्यानित्यवस्तुविवेचनात् ॥
६. मुक्तीति = मुक्तिप्राप्त्युपायभूतां ब्रह्मविचारणरूपां पदवीम् ॥ ७. कृतिषु = प्रापञ्चिकव्यवहारेषु ॥
८. ब्रह्मनिष्ठ इति = ब्रह्मणि नितरां सदातनी स्थितिः यस्य तादृश एव, परित्यज्य सर्वं व्रजति प्राप्नोति ब्रह्मेति परिव्राट्शब्दवाच्यस्सन्न्यासीत्यर्थः ॥

102 ज्ञात्वात्मानं श्रुतिफणितिभिश्चान्यथाज्ञान्य
हीनं निर्णीय च सुमननैरुन्मिषत्तत्त्वदृष्टौ
सुप्तौ साक्षाद्यतिभिरिह यद्दृश्यते दर्शनीयं
जागृद्वस्तूभवनमपि चेत्तस्य तत् पूरुषार्थः

—*॥ नीतिमार्गप्रदीपिका संपूर्णा ॥*—

१. उन्मिषदिति = उन्मिषन्ती उन्मीलन्ती तत्त्वदृष्टि ब्रह्मस्फूर्तिरेव दृष्टिः नेत्रं यस्यामिति लौकिकसुप्तेर्व्यतिरेको दर्शितः ॥

२. सुप्ताविति = सुप्तौ समाधिरूपायाम् । दर्शनीयं यं ब्रह्म यतिभिः साक्षात् दृश्यते तस्य ब्रह्मणः जागृद्वस्तुभवनं जागृद्दशानुभाव्यमानत्वमपि भवति चेत् ॥ समाधिरूपायां सुप्तौ स्वाप्निकवस्तुवत् ब्रह्मणो भानं, प्रपञ्चव्यवहाररूपायां जागृति तु प्रपञ्चभानं, इति भेदमन्तरेणैव समाधाविव व्यवहारकालेऽपि ब्रह्मभानमेव भवति चेदिति भावः ॥

३. तत्पूरुषार्थः = तदेव पुरुषार्थ इत्यर्थः ॥